हव मणकरण सावज्जजोगमणण पन्नत्त वीयरागेहि ॥६॥ कारवण पुण मणसा चिन्तेइ करेउ एस सावज्ज। चिन्तेई य कए उण सुट्ठु कय अणुमई होइ ॥८॥' इयाणिं वीओ भेओ—न करेइ न कारवेइ करन्तपि अन्न न समणुजाणइ मणेण वायाए एस एक्को, तहा मणेण काएण वीओ, तहा वायाए काएण तइओ ॥३॥ एम वीओ मूलभेओ गओ। एवमनया दिशा शेषा अपि भावनीयाः। सुगमत्वाद्विस्तर-भयाच्च न दर्शिताः। नवरं 'लद्धफलमाणमेय, भङ्गा उ हवन्ति अउणपन्नास। तीयाणागयसपइगुणिय कालेण होइ इम ॥१॥ सीयालं भङ्गसय कह। कालतिएण होइ गुणणाउ। तीयस्स पडिक्कमण, पच्चुपन्नस्स सवरण ॥२॥ पच्चक्खाण च तहा, होइ य एस्सस्स एव गुणणाउ। कालतिएण भणिया, जिणगणहरवायएहि च। ३। अत्र चाद्यभेदत्रय साधुश्रावकोपयोगि, शेषभङ्गास्तु गृहस्थोपयोगिनः। आह—साधुप्रत्याख्याननिरूपणाया कः श्रावकप्रत्याख्यानभेदकथनस्यावसरः? । उच्यते—प्रत्याख्यानसामान्यात् तदभिधानेऽपि न दोषः। कृत प्रसङ्गेन, प्रकृतमुच्यते—इह च सूक्ष्म वा बादर वेत्यादिना द्रव्यप्राणातिपातोऽभिहितोऽनेन चैकग्रहणे तज्जातीयग्रहण-मिति न्यायाच्चतुर्विधः प्राणातिपात उपलक्षित इत्यतस्तदभिधानायाह—

**से पाणाइवाए चउव्विहे पन्नत्ते त जहा—दव्वओ खित्तओ कालओ भावओ, दव्वओ ण पाणाइवाए छसु जीव निकाएसु, खेत्तओ ण पाणाइवाए सव्वलोए, कालओ ण पाणाइवाए दिया वा राओ वा, भावओ णं पाणाइवाए रागेण वा दोसेण वा ॥**

सेत्ति स पूर्वोक्त. प्राणातिपातः प्राणिप्राणवियोगः, चतुर्विधश्चतु प्रकारः प्रज्ञप्तो जिनैरभिहितस्तद्यथा—द्रव्यतो द्रव्यप्रधानतामाश्रित्य, क्षेत्रतः क्षेत्रमङ्गीकृत्य, कालत. कालं प्रतीत्य, भावत. भावमुररीकृत्य। एतानेव भेदान् व्याचष्टे—द्रव्यत इति व्याख्येयपदप-

रामर्शः, णमिति वाक्यालङ्कारे, प्राणातिपातः षट्सु षट्संख्येषु जीवनिकायेषु सूक्ष्मादिभेदभिन्नेषु प्राणिगणेषु संभवतीतिशेषः । क्षेत्रतो णमित्यलङ्कारे प्राणातिपातः सर्वलोके तिर्यग्लोकादिभेदभिन्ने भुवने भवतीति । कालतो णमिति प्राग्वत् प्राणातिपातो दिवा-वासरे, वा समुच्चये, रात्रौ-रजन्यां, वा समुच्चय एव स्यादिति । भावतो णमिति प्राग्वदेव प्राणातिपातो रागेण—मांसादिभक्षणाद्य-भिप्रायलक्षणेन, द्वेषेण–शत्रुहननादिपरिणामस्वरूपेण, वाशब्दौ समुच्चये, स्यादिति द्रव्यभावपदसमुत्था चतुर्भङ्गिका चात्र तद्यथा–द्रव्यतो हिंसा भावतश्च १ तथा द्रव्यतो न भावतः २ तथा भावतो न द्रव्यतः ३ तथा न द्रव्यतो न भावत इति ४ । तत्रायं भङ्ग-कभावार्थः–द्रव्यतो भावतश्चेति जहा ' केइ पुरिसे मियवहाए परिणते मियं पासित्ता आयन्नायड्ढियकोदण्डजीवे सरं निसिरेज्जा, से य मिगे तेण सरेण विद्धे मए सिया, एसा दव्वओ हिंसा भावओ वि ' । या पुनर्द्रव्यतो न भावतः सा खल्वीर्यादिसमितस्य साधोः कारणे गच्छत इति। उक्तंच "उच्चालियम्मि पाए इरियासमियस्स संकमट्ठाए । वावज्जेज्ज कुलिङ्गी मरेज्ज तं जोगमासज्ज ।२। न उ तस्स तन्निमित्तो बंधो सुहुमो वि देसिओ समये । अणवज्जो उवओगेण सव्वभावेण सो जम्हा" २ इत्यादि । या पुनर्भावतो न द्रव्यतः सेयं ' जहा केइ पुरिसे मंदमंदप्पगासे पएसे संठियं ईसिं वलियकायं रज्जु पासित्ता एस अहित्ति तत्थ (तव्वह) हणणप-रिणामपरिणए निकड्ढियासिपत्ते दुयं दुयं छिंदिज्जा एसा भावओ हिंसा न दव्वओ चरमभङ्गस्तु शून्य इति । एवं प्राणातिपातं ' भेदतोऽभिधायाथ तस्यैवातीतकालविहितस्य सविशेषनिन्दाप्रतिपादकं सूत्रमाह—

**जं मए इमस्स धम्मस्स केवलिपन्नत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिप्पहाणस्स अहि-रन्नसोवन्नियस्स उवसमपभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिस्स कुक्खीसंबलस्स निरग्गिस-**

रणस्स सपक्खालियस्स चत्तदोसस्स गुणगाहियस्स निव्वियारस्स निवित्तीलक्खणस्स पचमहव्वयजुत्तस्स असनिहिसचयस्स अविसवाइस्स ससारपारगामियस्स निव्वाणगमणपज्जवसाणफलस्स पुव्विं अण्णाणयाए असवणयाए अबोहिए अणभिगमेण अभिगमेण वा पमाएण रागदोसपडिबद्धयाए बालयाए मोहयाए मदयाए किड्डयाए तिगारवगरुयाए चउक्कसाओवगएण पचिंदिओवसट्टेणं पडुपन्नभारियाए सायासोक्खमणुपालयतेणं इह वा भवे अन्नेसु वा भवगहणेसु पाणाइवाओ कओ वा काराविओ वा कीरतो वा परेहिं समणुन्नाओ तं निंदामि गरिहामि तिविह तिविहेण मणेण वायाए काएणं ।

अत्र च यो मयाऽस्य धर्मस्य केवलिप्रज्ञप्तादिद्वाविंशतिविशेषणविशेषितस्य पूर्वमज्ञानतादिभिश्चतुर्भिः प्रमादादिभिश्चैकादशभिः कारणैः प्राणातिपातः कृतस्त निन्दामीत्यादिसम्बन्धो द्रष्टव्यः । जमिति विभक्तिव्यत्ययाद्यः प्राणातिपात इति योगः । भाषामात्रे वा यदितिपद व्याख्येय । मयेति प्रतिक्रामकसाधुरात्मान निर्दिशति । अस्य स्वहृदयप्रत्यक्षस्य धर्मस्य प्रक्रमात्सर्वचारित्रात्मकस्य, अत्र च 'जपि य मए इमस्स धम्मस्स' तथा 'जपि य इम अम्हेहि इमस्स धम्मस्से'त्यादिपाठान्तराण्युक्तानुसारतः स्वय व्याख्येयानीति । किंविशिष्टस्य? केवलिप्रज्ञप्तस्य सर्वज्ञोपदिष्टस्य ॥ १ ॥ तथा अहिंसा प्राणिसंरक्षण लक्षण चिह्न यस्यासौ अहिंसालक्षणः सत्त्वानुकम्पानुमेयसभव इत्यर्थस्तस्य ॥ २ ॥ तथा सत्येनावितथभाषणेनाधिष्ठितः समाश्रितः सत्याधिष्ठितः सत्यवचनव्याप्त इत्यर्थस्तस्य ॥ ३ ॥ तथा विनयो विनीतता मूल कारण यस्यासौ विनयमूलो विनयप्रभव इत्यर्थस्तस्य ॥ ४ ॥ तथा क्षान्तिः क्षमा प्रधाना सारभूता यस्यासौ क्षान्तिप्रधानस्तस्य ॥५॥ तथा हिरण्यं रजत सौवर्णिक सुवर्णमय कनककलशादि न विद्यते हिरण्यसौवर्णिके

यत्रा (स्या) सौ अहिरण्यसौवर्णिक उपलक्षणत्वात्सर्वपरिग्रहरहित इत्यर्थस्तस्य ॥ ६ ॥ तथोपशम इन्द्रियनोइन्द्रियजयस्तस्मात्प्रभवो जन्मोत्पत्तिर्यस्यासौ उपशमप्रभव इन्द्रियमनोनिग्रहलभ्य इत्यर्थस्तस्य ॥ ७ ॥ तथा नव ब्रह्मचर्याणि गुप्तिशब्दलोपात् वसतिकथाद्या नवब्रह्मचर्यगुप्तयस्ताभिर्गुप्तः संरक्षितो नवब्रह्मचर्यगुप्तिगुप्तस्तस्य ॥ ८ ॥ तथा न विद्यन्ते पचमानाः पाचका यत्राऽसौ अपचमानः पाकक्रियाविनिवृत्तसत्त्वासेवित इत्यर्थः । अथवा पचते पचमानो न पचमानोऽपचमानो धर्म्मो धर्मधर्म्मिणोरभेदोपचारादेवमन्यत्राऽपि द्रष्टव्यम् ॥ ९ ॥ अत एव भिक्षावृत्तेर्भिक्षया भक्तादेः परतो याचनेन वृत्तिर्वर्तनं धर्म्मसाधककायपालनं यत्रासौ भिक्षावृत्तिस्तस्य ॥ १० ॥ तथा कुक्षावेव बहिःसंचयाभावाज्जठर एव शम्बलं पाथेयं यत्रासौ कुक्षिशम्बलस्तस्य ॥ ११ ॥ तथा निरगतमग्नेः पावकाच्छरणं शीतादिपरित्राणं यत्र । अथवा निर्गते स्वीकाराभावादग्निशरणे वह्निभवने यत्रासौ निरग्निशरणः तस्य । अथवा निर्गतमग्नेः स्मरणं यत्रासौ निरग्निस्मरणस्तस्य ॥ १२ ॥ तथा संप्रक्षालयति कर्ममलं शोधयतीत्येवंशीलः सम्प्रक्षाली तस्य कप्रत्ययोपादानाद्वा सम्प्रक्षालिकस्य सम्प्रक्षालितस्य वा सर्वदोपमलरहितस्य ॥ १३ ॥ तथा त्यक्ता हानिं नीता अभावमापादिता इतियावद्दोपा मिथ्यात्वाज्ञानादिदूपणानि येनासौ त्यक्तदोपः। अथवा त्यक्तो द्वेपोऽप्रीतिलक्षणो यस्मिन्नसौ त्यक्तद्वेपस्तस्य ॥ १४ ॥ अत एव गुणग्राहिणो गुणग्रहणशीलस्य कप्रत्ययविधानाद्गुणग्राहिकस्य वा पाठान्तरं तथाहि—प्रकृतधर्म्मचारिणो गुणवद्गुणोपबृंहणपरा एव भवन्त्यन्यथा धर्मस्यैवाभावप्रसङ्गात् । यदाह—" नो खलु अप्परिवडिए निच्छयओमइलिए व सम्मत्ते । होई तओ परिणामो जुत्तोणुवबूहणाईया " ॥ १५ ॥ तथा निर्गतो विकारः कामोन्मादलक्षणो यस्मादसौ निर्विकारस्तस्य ॥ १६ ॥ तथा निवृत्तिलक्षणस्य सर्वसावद्ययोगोपरमस्वभावस्य ॥ १७ ॥ तथा पंचमहाव्रतयुक्तस्येतिप्रतीतं नवरं अहिंसालक्षणस्येत्याद्यभिधानेप्यस्याभिधानं महाव्रतानां प्राधान्यख्या-

पनार्थमनुक्तमहाव्रतसंग्रहार्थं च तथाहि—नात्राऽदत्तादान कण्ठत' केनापि विशेषणेनाभिहितमतो युज्यतेऽस्य (त्र) विशेषणस्योपन्यास इति ॥ १८ ॥ तथा न विद्यते सनिधिर्मोदकोदकखर्ज्जूरहरीतक्यादेः पर्युषितस्य सचयो धारण यत्रासावसनिधिसचयस्तस्य ॥ १९ ॥ तथा अविसवादिनो दृष्टेष्टाविरोधिनः पाठान्तरे वा अविसवादितस्य सद्भूतप्रमाणाबाधितस्येत्यर्थः ॥ २० ॥ तथा ससारपार भवार्णवतीर गमयति तदारूढप्राणिन. पोतवत्प्रापयतीति ससारपारगामी तस्य, कप्रत्ययोपादानात् ससारपारगामिकस्य वा ॥ २१ ॥ तथा निर्वाणगमन मुक्तिप्राप्ति', पर्यवसाने आनुपङ्गिकसुरमनुजसुखानुभवपर्यन्ते, फल कार्य, यस्यासौ निर्वाणगमनपर्यवसानफलस्तस्य ॥ २२ ॥ एवंविधस्य धर्मस्य पूर्वं धर्मप्रतिपत्तिकालात्प्राक् अज्ञानतया सामान्यतोऽवगमाभावेन ॥ १ ॥ तथाऽश्रवणतया प्रज्ञापकमुखादनाकर्णनभावेन ॥ २ ॥ अथवा श्रवणेपि अबोहिएत्ति अबोध्या अबोधेन यथावद्धर्म्मस्वरूपापरिज्ञानेन ॥ २ ॥ अथवा व्यवहारतः श्रवणावगमसद्भावेऽपि अणभिगमेणति अनभिगमेन सम्यगप्रतिपत्त्येत्यर्थ', अथवा अभिगमेण वत्ति विभक्तिव्यत्ययादभिगमे वा सम्यग्धर्म्मप्रतिपत्तौ वा प्रमादेन मद्यविषयादिलक्षणेन ॥ १ ॥ तथा रागद्वेषप्रतिबद्धतया रागद्वेषाकुलतयेत्यर्थः ॥ २ ॥ तथा बालतया शिशुतया अपण्डिततया वा ॥ ३ ॥ तथा मोहतया विचित्रतया मोहनीयकर्म्मायत्ततया वा ॥ ४ ॥ तथा मन्दतया कायजडतया अलसतयेत्यर्थः ॥ ५ ॥ तथा क्रिड्डयाएत्ति क्रीडतया केलीकिलतया द्युतादिक्रीडनपरतयेत्यर्थः ॥ ६ ॥ तथा त्रिगौरवगुरुकतया ऋद्धिरससातलक्षणगौरवत्रिकभारिकतया ॥ ७ ॥ तथा चतुःकषायोपगतेन क्रोधाद्युदयवशगमनेनेत्यर्थः ॥ ८ ॥ तथा पञ्चेन्द्रियाणा स्पर्शनादिहृषीकाणां उप सामीप्येन वश आयतत्ता वर्णलोपात्पञ्चेन्द्रियोपवशस्तेन यदार्त्तमार्त्तध्यान विह्वलतेत्यर्थः पञ्चेन्द्रियोपवशार्त्तं तेन ॥ ९ ॥ तथा पडुपन्नभारियाएत्ति । इह प्रत्युत्पन्न वर्तमानमुत्पन्न वोच्यते ततश्च प्रत्युत्पन्नश्चासौ भारश्च कर्मणामिति गम्यते प्रत्युपन्नभारः स

विद्यते यस्यासौ प्रत्युत्पन्नभारी तस्य भावः प्रत्युत्पन्नभारिता तया कर्मगुरुतयेत्युक्तं भवति। पाठान्तरस्तु प्रतिपूर्णभारितया भावार्थः पूर्ववत् ॥ १० ॥ तथा सातात्सातवेदनीयकर्म्मणः सकाशात्सुखं शर्म सातसुखं, अथवा सातं च तत्सुखं च सातसुखमतिशयसुखं तदनुपालयताऽनुभवता सुखासक्तमनसेत्यर्थः । पाठान्तरे तु सदा सर्वकालं सुखमनुपालयतेति व्यक्तम् ॥ ११ ॥ इहं वत्ति विन्दुलोपात् इह वास्मिन्ननुभूयमाने भवे मनुष्यजन्मनि, अन्येषु वा अस्माज्जन्मनोऽपरेषु भवग्रहणेषु जन्मोपादानेषु प्राणातिपातः कृतो वा स्वयं निर्वर्तितः, कारितो वाऽन्यैर्विधापितः, क्रियमाणो वा विधीयमानः परैरन्यैः समनुज्ञातोऽनुमोदितस्तं प्राणातिपातं । निन्दामि स्वप्रत्यक्षमेव जुगुप्से, तथा गर्हामि गुरुसमक्षं जुगुप्से, त्रिविधं कृतकारितानुमतिभेदान् त्रिप्रकारं त्रिविधेन त्रिप्रकारेण करणेन। तदेवाह— मनसा वाचा कायेनेति प्रतीतमेव ॥ सांप्रतं त्रैकालिकप्राणातिपातविरतिं प्रतिपादयन्नाह—

अईयं निन्दामि पडुपन्नं संवरेमि अणागयं पच्चक्खामि सव्वं पाणाइवायं

अतीतं अतीतकालकृतं निन्दामि । तथा प्रत्युत्पन्नं वर्त्तमानसमयसम्भविनं संवृणोमि भवंतं वारयामीत्यर्थः । तथाऽनागतं भविष्यत्कालविषयं प्रत्याख्यामीति पूर्ववत् । किं तदित्याह—सर्वं समस्तं न पुनः परिस्थूरमेव प्राणातिपातं जीवितविनाशं । इदमेवानागतप्रत्याख्यानं विशेषयन्नाह—

जावज्जीवाए अणिस्सिओहं नेव सयं पाणे अइवाएज्जा नेवन्नेहिं पाणे अइवायावेज्जा पाणे अइवायन्ते वि अन्ने न समणुजाणामि

यावज्जीवं प्राणधारणं यावत् अनिश्रितोऽह इहपरलोकाशसाविप्रमुक्तोऽह ममेतो व्रतानुपालनात् किञ्चिदमरसुख मनुजसुख वा भूयादित्याकाक्षारहित इत्यर्थः । नैव स्वय प्राणानघ्नन् अइवाएज्जचि उक्तहेतोरतिपातयामि विनाशयामि, नैवान्यैः प्राणान् अइवाया-वेज्जचि अतिपातयामि, प्राणानतिपातयतोऽप्यन्यान्न समनुजानामि, क्वापि नेव सयमित्यादिपदानि न दृश्यते । कतिसाक्षिक पुनरिद प्रत्याख्यानमिति चेत् ? उच्यते, अर्हदादिपञ्चकसाक्षिक, एतदेव दर्शयति—

तजहा-अरहन्तसक्खिय सिद्धसक्खियं साहुसक्खिय देवसक्खिय अप्पसक्खिय

तद्यथेत्युपदर्शनार्थः अर्हन्तस्तीर्थकरास्ते साक्षिणः समक्षभाववर्त्तिनो यत्र तत् , शेषाद्वेति ( ७-३-१७५ ) कप्रत्ययविधानादर्ह-त्साक्षिक प्रत्याख्यानक्रियाविशेषण चैतदेवमन्यत्रापि द्रष्टव्यम् । तथाहीहक्षेत्रवर्त्तिनोऽन्यक्षेत्रवर्त्तिनो वा तीर्थकराः केवलवरज्ञानप्रधा-नचक्षुषा ममेद प्रत्याख्यान पश्यन्तीत्यतस्तत्साक्षिकमुच्यते एव सिद्धा मुक्तिपदप्राप्ताः साक्षिणो दिव्यज्ञानभावेन समक्षभाववर्त्तिनो यत्र तत्सिद्धसाक्षिक । आहोभयप्रत्यक्षभावे लोके साक्षिकव्यवहारो रूढः, नचात्र प्रत्याख्यानकर्तुः सिद्धाः प्रत्यक्षा अतीन्द्रियज्ञानगो-चरत्वात्तेषा, तत्कथं ते तस्य साक्षिणः ? उच्यते-श्रुतवासितमतेस्तत्स्वरूपज्ञस्य तस्य ते भावकल्पनया प्रत्यक्षा इवेति कथ न साक्षिण इति । तथा साधवो मुनयस्ते सातिशयज्ञानवन्त इतरे वा विरतिप्रतिपत्तिसमयसमीपवर्त्तिनः साक्षिणो यत्र तत्साधुसाक्षिकं । तथा देवा भवनपत्यादयस्ते जिनभवनाद्यधिष्ठायिनस्तिर्यग्लोकसञ्चरिष्णवो वा विरतिप्रतिपत्तिक्रमभाविनश्चैत्यवन्दनाद्युपचारात्समीपमुपगताः स्वस्थानस्था वा कथचित् द्वीपसमुद्रान् प्रति प्रयुक्तावधयः साक्षिणो यत्र तद्देवसाक्षिकं । यदाह–चूर्णिकारः 'विरइपडिवत्तिकाले चिइ-

वंदणाइणोवयारेण अवस्समहासंनिहिया देवया सन्निहाणम्मि भवइ अतो देवसक्खियं भणियं । अहवा 'भवणवणजोइ (स) वेमाणिया देवा सट्ठाणतथा चेव अहापवत्तोवहिणा दीवं दीवपज्जवेहिं समुद्दं समुद्दपज्जावेहिं बहवे नारयतिरियमणुयदेवे य विविहभावसंपउत्ते पेच्छमाणा साहुंपि पाणाइवायविरइं पडिवज्जमाणं पेच्छन्ति, विसेसओ तिरियजम्भगा दियराओ दिसिविदिसासुं चरन्तित्ति।' तथात्मा स्वजीवः स स्वसंवित्प्रत्यक्षविरतिपरिणामपरिणतः साक्षी यत्र तदात्मसाक्षिकं । इह ससाक्ष्यं कृतमनुष्ठानमत्यन्तदृढं जायत इति साक्षिणः प्रतिपादिताः । पृथग्जनेऽपि प्रतीतमेवैतद्यदुत ससाक्षिको व्यवहारो निश्चलो भवतीति । एवं च कृते यत्संपद्यते तदाह

**एवं भवइ भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा ।**

एवमिति प्रागुक्तप्रत्याख्याने संपन्ने सति किमित्याह–भवति जायते, क इत्याह–भिक्षुर्वेति आरम्भत्यागाद्धर्म्मकायपरिपालनाय भिक्षणशीलो भिक्षुरेवं भिक्षुक्यपि, पुरुषोत्तमो धर्म्मइति कृत्वा भिक्षुर्विशेष्यते । तद्विशेषणानि च भिक्षुक्या अपि द्रष्टव्यानीत्याह–संयतविरतप्रतिहतप्रत्याख्यातपापकर्मा तत्र सामस्त्येन यतः संयतः सप्तदशप्रकारसंयमोपेतस्तथा विविधमनेकधा द्वादशविधे तपसि रतो विरतस्ततश्च संयतश्चासौ विरतश्च संयतविरतः । तथा प्रतिहतं स्थितिह्रासतो ग्रन्थिभेदेन विनाशितं प्रत्याख्यातं च हेत्वभावतः पुनर्वृद्ध्यभावेन निराकृतं पापमशुभं कर्म्म ज्ञानावरणीयादि येन स तथाविधस्ततः पुनः पूर्वपदेन सह कर्म्मधारयः, दिवा वा दिवसे वा रात्रौ वा रजन्यां वा एकको वा कारणिकावस्थायामसहायो वा, पर्षद्गतो वा साधुसंहतिमध्यवर्त्ती वा, सुप्तो वा रात्रिमध्ययामद्वये निद्रागतो वा, जाग्रद्वा निद्राविमुक्तो वेति। शेषं तथैवेति । सांप्रतं प्राणातिपातविरतिमेव स्तुवन्नाह—

एस खलु पाणाइवायस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाण सव्वेसिं सत्ताण अदुक्खणयाए अजूरणयाए अतिप्पणयाए अपीडणयाए अपरियावणयाए अणोद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणुचिन्ने परमरिसिदेसिए पसत्थे त दुक्खक्खयाए कम्मक्खयाए मोक्खयाए बोहिलाभाए संसारुत्तारणाए त्तिकट्टु उवसंपज्जित्ताण विहरामि ॥

एसत्ति लिङ्गव्यत्ययादिदमधिकृत खलु निश्चयेन प्राणातिपातस्येति विभक्तिव्यत्ययात्प्राणातिपाताज्जीवहिंसायाः वेरमणेत्ति विरमण निवृत्तिर्वर्तते, किमित्याह–हिएत्ति हित कल्याण तत्कारित्वाद्धित पथ्यभोजनवत्। तथा सुख शर्म्म तद्धेतुत्वात्सुख पिपासितशीतलजलपानवत्। तथा क्षम युक्त सङ्गतमुचितरूपमितियावत्। तथा निस्सेसिएत्ति प्राकृतत्वेन यकारलोपात् निःश्रेयमो मोक्षस्तत्कारणत्वान्निःश्रेयस तदेव निःश्रेयसिक। तथा आनुगामिकमनुगमनशील भवपरम्परानुबन्धिसुखजनकमित्यर्थः। कथमिदमेवविधमित्याह–सर्वेषा निःशेषाणा प्राणा इन्द्रियपञ्चकमनःप्रभृतित्रिविधबलोच्छ्वासनिश्वासायुर्लक्षणा असवो विद्यन्ते येषा तेऽतिशायनार्थमत्वर्थीयात्प्रत्ययविधानात्समग्रप्राणधारिणः प्राणाः पञ्चेन्द्रियप्राणिन इत्यर्थस्तेषा। तथा सर्वेषा समस्ताना अभूवन् भवन्ति भविष्यन्ति चेति भूतानि पृथिवीजलज्वलनपवनवनस्पतयः कालत्रयव्यापिसत्तासमन्वितास्तेषा। तथा निरुपक्रममजीवितेन जीवन्तीति जीवाः देवनारकोत्तमपुरुषाऽसङ्ख्येयवर्षायुस्तिर्यङ्नरचरमशरीरिलक्षणा यथोपनिबद्धजीवनधर्म्माणस्तेषा। तथा सर्वेषा लोकोपकारमात्रहेतुसत्त्वोपेतत्वात्सत्त्वा सोपक्रमायुषस्तिर्यग्मनुष्याः असपूर्णप्राणभाजो द्वित्रिचतुरिन्द्रियाश्च तेषा, क्वाप्यमीषा परस्परमेव विशेषो दृश्यते यथा "प्राणा द्वित्रिचतुः प्रोक्ता भूतास्तु तरवः स्मृता.। जीवाः पञ्चेन्द्रिया ज्ञेयाः शेषाः सत्त्वा इतीरिताः" एकार्थिकानि वैतान्यत्या-

दररक्षणीयताख्यापनाय नानादेशजविनेयानुग्रहाय प्रयुक्तानीति । एतेषां च अदुक्खणयाएत्ति अदुःखनतया अदुःखोत्पादनेन मानसिकासातानुदीरणेनेत्यर्थः । तथा अशोचनतया शोकानुत्पादनेन । तथा अजूरणतया शरीरजीर्णत्वाऽविधानेन, दृश्यन्ते चारम्भिणो जना भारवाहनाहारनिरोधकशलतांकुशारानिपातादिभिर्वृपभमहिषाश्वकरिकरभरासभादीनां शरीराणि जूरयन्तोऽतस्तदकरणेनेति । तथा अतेपनतया स्वेदलालाश्रुजलक्षरणकारणपरिवर्ज्जनेन । तथा अपीडनतया पादाद्यनवगाहनेन । तथा अपरितापनतया समन्ताच्छरीरसन्तापपरिहारतः । तथा अनवद्रावणतया उत्त्रासनकरणाभावेन मारणपरिहरणेन वा । किंचेदं प्राणातिपातविरमणपदं महार्थं महान् प्रभूतोऽर्थः फलस्वरूपाद्यभिधेयं यस्य तन्महार्थं महागोचरं । तथा महांश्चासौ गुणश्च महागुणः सकलगुणाधारत्वान्महाव्रतानामिति ।[1] तथा महानतिशायी अनुभावः स्वर्गापवर्गप्रदानादिलक्षणं माहात्म्यं यस्य तन्महानुभावं । तथा महापुरुषैस्तीर्थकरगणधरादिभिरुत्तमनरैरनुचीर्णं एकदासेवनात्पश्चादप्यासेवितं महापुरुषानुचीर्णं । तथा परमर्षिभिस्तीर्थकरादिभिरेव देशितं भव्योपकाराय कथितं परमर्षिदेशितं । तथा प्रशस्तं अत्यन्तशुभं सकलकल्याणकलापकारणत्वात् यतश्चैवमतस्तत्प्राणातिपातविरमणं दुःखक्षयाय शारीरमानसानेकक्लेशविलयाय, कर्म्मक्षयाय ज्ञानावरणाद्यदृष्टवियोगाय मोक्षाय पाठान्तरतो मोक्षतायै परमनिःश्रेयसायेत्यर्थः, बोधिलाभाय जन्मान्तरे सम्यक्त्वादिसद्धर्म्मप्राप्तये, संसारोत्तारणाय महाभीमभवभ्रमणपारगमनाय, मे भविष्यतीति गम्यत इतिकृत्वा इतिहेतोः, उप-

१ सकलव्रतज्येष्ठत्वादाद्यव्रतस्य । आह च-एक्कं चिय एत्थ वयं निद्दिट्ठं जिणवरेहिं सव्वेहिं । पाणाईवायविरमणवसेसा तस्स रक्खणट्ठा ॥ तथा पठितं श्रुतं च शास्त्रं गुरुपरिचरणं च गुरुतपश्चरणं घनगर्जितमिव विजलं सर्वं विफलं दयाविकलं प्र० ॥

सपद्य तदेव मामस्त्वेनाङ्गीकृत्य, विहरामि मासकल्पादिना सुसाधुविहारेण वर्त्ते,[1] अन्यथा व्रतप्रतिपत्तेर्वैयर्थ्यप्रसङ्गादिति । अथ व्रतप्रतिपत्तिं निगमयन्नाह—

पढमे भन्ते महव्वए उवट्ठिओमि सव्वाओ पाणाइवायाओ वेरमण ॥

प्रथमे भदन्त महाव्रते किमित्याह—उप सामीप्येन तत्परिणामापत्त्येत्यर्थः स्थितो व्यवस्थितोऽस्मि अहं ततश्च इत आरभ्य मम सर्व्वस्मान्निःशेषात्प्राणातिपाताज्जीवहिंसाया विरमण निवृत्तिरिति । अत्र च भदन्त इत्यनेन गुर्वामन्त्रणवचसादिमध्यावसानेषूपन्य-स्तेन गुरुमनापृच्छ्य न किंचित्कर्त्तव्य, कृत च तस्मै निवेदनीयमेव तदाराधित भवतीत्येतदाह । दोषाश्चेह प्राणातिपातकर्तॄणा नरक-गमनाल्पायुर्बहुरोगित्वकुरूपादयो वाच्याः । इत्युक्त प्रथम महाव्रत ॥ इदानीं द्वितीयमाह—

अहावरे दोच्चे भन्ते ! महव्वए मुसावायाओ वेरमणं सव्व भन्ते ! मुसावाय पच्चक्खामि से कोहा वा लोहा वा भया वा हासा वा नेव सय मुसं वएज्जा नेवन्नेहिं मुस वायावेज्जा मुस वयन्तेवि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेण वायाए काएण न करेमि न कारवेमि करन्तंपि अन्न न समणुजाणामि तस्स भन्ते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ॥

अथेति प्रथममहाव्रतानन्तरे अपरस्मिन्नन्यस्मिन् द्वितीये सूत्रक्रमप्रामाण्यात् द्विसंख्ये द्वितीयस्थानवर्त्तिनीत्यर्थः । भदन्त महाव्रते

१ ग्राम नगरादिषु पर्यणामि अधिकं प्र० ॥

किमित्याह—मृपावादादलीकभापणाद्विरमणं सम्यग्ज्ञानश्रद्धानपूर्वकं सर्वथा निवर्तनं भगवतोक्तमिति वाक्यशेपः । स च मृपावादश्चतुर्विधः तद्यथा सद्भावप्रतिपेधः १ असद्भावोद्भावनं २ अर्थान्तराभिधानं ३ गर्हावचनं च ४ तत्र सद्भावप्रतिपेधो यथा " नास्त्यात्मा नास्ति पुण्यं पापं वेत्यादि " मृपात्वं चास्यात्माद्यभावे दानध्यानाध्ययनादिसर्वक्रियावैयर्थ्यप्रसङ्गात् जगद्वैचित्र्याभावप्रसङ्गाच्च । असद्भावोद्भावनं यथा " श्यामाकतन्दुलमात्र आत्मा ललाटस्थो हृदयदेशस्थः सर्वगतो वेत्यादि " अलीकता चास्य वचसः " श्यामाकतन्दुलमात्रे ललाटस्थे हृदयदेशस्थे वात्मनि सर्वशरीरे सुखदुःखानुभवानुपपत्तेर्निरात्मनि वस्तुनि वेदनाया अभावात् , सर्वजगद्व्यापित्वे सर्वत्र शरीरोपलम्भः सुखदुःखानुभवश्चाविशेपेण स्यान्नचैवं दृश्यते तस्मादलीकतेति । अर्थान्तराभिधानं " गामश्वं ब्रुवाणस्येत्यादि " । गर्हावचनं तु " काणं काणमेव वदत्यकाणमपि वा काणमाह एवमन्धकुब्जदासादिष्वपि भावनीयं " अथवा परलोकमङ्गीकृत्य गर्हार्हं वचनं गर्हावचनं तच्च " दम्यन्तां बलीवर्दादयः, प्रदीयतां कन्या वरायेत्यादि " । यतश्चैवमत उपादेयमेतदिति विनिश्चित्य सर्वं समस्तं भदन्त! मृपावादमनृतवचनं प्रत्याख्यामि । सेत्ति तद्यथा क्रोधाद्वा कोपात्, लोभाद्वा, अभिष्वङ्गात् । आद्यन्तग्रहणाच्च मानमायापरिग्रहो वेदितव्यः । भयाद्वा भीतेः, हास्याद्वा हसनात्सकाशात्, अनेन तु प्रेमद्वेपकलहाभ्याख्यानादिपरिग्रहः । वा शब्दाः समुच्चये । अस्मात्किमित्याह—"नेव सयं मुसं वएज्जत्ति" नैव स्वयमात्मना, मृपा मिथ्या, वदामि वच्मि, नैवान्यैः परैर्मृपा वितथं, वायावेज्जत्ति वादयामि भापयामि, मृपावदतोऽपि भापमाणानप्यन्यानपरान् न नैव समनुजानामि अनुमोदयामि । कथमित्याह—यावज्जीवं यावत्प्राणधारणं, त्रिविधं कृतकारितानुमतिभेदात् त्रिप्रकारं, त्रिविधेन मनःप्रभृतिना त्रिप्रकारेण करणेन । तदेवाह—मनसा वाचा, कायेनेति । अस्य च करणस्य कर्मोक्तलक्षणो मृपावादस्तमपि वस्तुतो निराकार्यतया सूत्रेणैव दर्शयन्नाह—न करोमि स्वयं

न कारयाम्यन्यैः कुर्वन्तमप्यन्यं न समनुजानामि । तथा तस्य त्रिकालभाविनोऽधिकृतमृषावादस्य संबन्धिनमतीतमवयवं भदन्त प्रतिक्रमामि भूतान्मृषावादान्निवर्त्तेऽहमित्युक्त भवति । तस्माच्च निवृत्तिर्यत्तदनुमतेर्विरमणमिति । तथा निन्दामि गर्हामीति अत्रात्मसाक्षिकी निन्दा, परसाक्षिकी गर्हा, आहच—"मणसा मिच्छादुक्कडकरण भावेण इह पडिक्कमण । सचरित्तपच्छयानो निन्दा गरिहा गुरुसमक्ख" सचरित्रस्य स्वप्रत्यक्षमेन पश्चात्तापो निन्देति । किं जुगुप्से इत्याह—आत्मानमतीतमृषावादभाषिण स्वं,तथा व्युत्सृजामि भूतमृषावाद परित्यजामि, इह च क्रोधाद्वा भयाद्वेत्यादिना भावतो मृषावादोऽभिहितोऽनेन चैकग्रहणेतज्जातीयग्रहणमितिन्यायाच्चतुर्विधो मृषावाद उपलक्षित इत्यतस्तदभिधानायाह—

से मुसावाए चउव्विहे पन्नत्ते तजहा—दव्वओ खित्तओ कालओ भावओ। दव्वओ णं मुसावाए सव्व दव्वेसु। खेत्तओ ण मुसावाए लोए वा अलोए वा । कालओ ण मुसावाए दिया वा राओ वा । भावओ णं मुसावाए रागेण वा दोसेण वा ।

सेत्ति स पूर्वाभिहितो, मृषावादश्चतुर्विधः प्रज्ञप्तस्तद्यथा—द्रव्यतो द्रव्यप्राधान्यमाश्रित्य १ क्षेत्रत' क्षेत्रमङ्गीकृत्य २ कालतः कालप्रतीत्य ३ भावतो भावमधिकृत्य ४ द्रव्यतो णमित्यलङ्कारे मृषावादः सर्वद्रव्येषु, अन्यथाप्ररूपणतो धर्माधर्मादिसमस्तपदार्थेषु॥१॥ क्षेत्रतो णमिति सर्वत्रालङ्कारमात्रे मृषावादः लोके वा लोकविषये अलोके वा अलोकविषये ॥ २ ॥ कालतो मृषावादो दिवा वा दिवसेऽधिकरणभूते विषयभूते वा, रात्रौ वा रजन्यामाधारभूताया विषयभूताया वा ॥३॥ भावतो मृषावादो रागेण वा मायालोभलक्षणेन वा, तत्र मायया अग्लानोऽपि ग्लानोऽह ममानेन कार्यमिति वक्ति, भिक्षाटनपरिजिहीर्षया वा पादपीडा ममेति भाणते इ

त्यादि लोभेन तु शोभनतरान्नलाभे सति प्रान्तस्यैषणीयत्वेऽप्यनेषणीयमिदमिति ब्रूते इत्यादि । द्वेषेण वा क्रोधमानस्वरूपेण, तत्र क्रोधेन वदति त्वं दास इत्यादि, मानेन तु अबहुश्रुत एव बहुश्रुतोऽहमित्यादि । उपलक्षणत्वाद्भयहास्यादयोऽपीह द्रष्टव्याः तत्र भयात्किञ्चिद्वितथं कृत्वा प्रायश्चित्तभयान्न कृतमित्यादि भाषते एवं हास्यादिष्वपि वाच्यमिति । ४ । द्रव्यभावपदप्रभवा चतुर्भङ्गिका चात्र द्रष्टव्या सा पुनरियं "दव्वओ नामेगे मुसावाए नो भावओ, भावओ नामेगे मुसावाए नो दव्वओ, एगे दव्वओवि भावओवि, एगे नो दव्वओ नो भावओ । तत्थ कोइ कञ्चि हिंसुज्जुओ भणइ इओ तए पसुमिगाइणो वोलिन्तगा दिट्ठति? सो पुण दयाए दिट्ठेहिवि भणइ न दिट्ठत्ति एस दव्वओ मुसावाओ न भावओ । अवरो मुसं भणीहामित्ति परिणओ सहसा सच्चं भणइ एसो भावओ न दव्वओ। अवरो मुसं भणीहामित्ति परिणओ मुसं चेव मणई एस दव्वओवि भावओवि । चरिमभंगो पुण सुन्नोति॥

जं मए इमस्स धम्मस्स केवलिपन्नत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिप्पहाणस्स अहिरण्णसोवन्नियस्स उवसमपभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिस्स कुक्खीसंबलस्स निरग्गिसरणस्स संपक्खालियस्स चत्तदोसस्स गुणग्गाहियस्स निव्वियारस्स निव्वित्तीलक्खणस्स पंचमहव्वयजुत्तस्स असंनिहिसंचयस्स अविसंवाइस्स संसारपारगामिस्स निव्वाणगमणपज्जवसाणफलस्स पुव्विं अन्नाणयाए असवणयाए अबोहिए अणभिगमेणं अभिगमेण वा पमाएणं रागदोसपडिबद्धयाए बालयाए मोहयाए मंदयाए किड्डयाए तिगारवगरुययाए चउक्कसाओवगएणं पंचिंदिओवसट्टेणं पडुप्पन्नभारियाए सायासोक्खमणुपालयंतेणं इहं वा भवे अन्नेसु वा भवग्गहणेसु मुसावाओ भासिओ वा भासाविओ वा भासिज्जंतो वा परेहिं समणुन्नाओ तं निन्दामि

गरिहामि तिविहं तिविहेण मणेणं वायाए काएणं अईयं निन्दामि पडुप्पन्न संवरेमि अणागयं पच्चक्खामि सव्व मुसावायं जावज्जीवाए अणिस्सिओहं नेव सयं मुसं वएज्जा नेवन्नेहिं मुसं वायावेज्जा मुसं वयंतेवि अन्ने न समणुजाणामि तंजहा-अरहन्तसक्खियं सिद्धसक्खियं साहुसक्खियं देवसक्खियं अप्पसक्खियं एवं भवइ भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा एस खलु मुसावायस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अदुक्खणयाए असोयणयाए अजूरणयाए अतिप्पणयाए अपीडणयाए अपरियावणयाए अणोद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणुचिन्ने परमरिसिदेसिए पसत्थे तं दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए संसारुत्तारणाए त्तिकट्टु उवसंपज्जित्ताणं विहरामि। दोच्चे भन्ते महव्वए उवट्ठिओमि सव्वाओ मुसावायाओ वेरमणं॥

एतत् सकलमपि प्राग्वत्समवसेयमिति नवरमिह दोषाः मृषाभाषिणा जिह्वाच्छेदाऽविश्वास मूकत्वादयो वाच्याः। इत्युक्तं द्वितीयं महाव्रतम्। साम्प्रतं तृतीयमाह—

अहावरे तच्चे भंते महव्वए अदिन्नादाणाओ वेरमणं सव्वं भन्ते अदिन्नादाणं पच्चक्खामि से गामे वा नगरे वा अरन्ने वा अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमन्तं वा अचित्तमन्तं वा नेव सयं अदिन्नं गिण्हिज्जा नेवन्नेहिं अ-

दिन्नं गिण्हावेज्जा अदिन्नं गिण्हंते वि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करन्तंपि अन्नं न समणुजाणामि तस्स भन्ते पडिक्कमामि निन्दामि गरिहामि अप्पाणं वोसिरामि ॥

अथापरस्मिँस्तृतीये भदन्त महाव्रते अदत्तादानाद्विरमणं सर्वं भदन्त अदत्तादानं प्रत्याख्यामीति पूर्ववत् । सेत्ति तद्यथा ग्रामे वा नगरे वा अरण्ये वेत्यनेन क्षेत्रपरिग्रहः, तत्र ग्रसति बुद्ध्यादीन् गुणानिति ग्रामस्तस्मिन् , न विद्यते करोऽस्मिन्निति नकरं तस्मिन् , अरण्यं काननादि तस्मिन् । तथा अल्पं वा, बहु वा, अणु वा, स्थूलं वा, चित्तवद्वा, अचित्तवद्वेत्यनेन तु द्रव्यपरिग्रहः । तत्राल्पं मूल्यत एरण्डकाष्ठादि, बहु मूल्यत एव वज्रादि, अणु प्रमाणतो वज्रादि, स्थूलं प्रमाणत एव एरण्डकाष्ठादि, एतच्च चित्तवद्वा सचेतनं, अचित्तवद्वाऽचेतनं, किमित्याह–नैव स्वयमदत्तं गृह्णामि, नैवान्यैरदत्तं ग्राहयामि गृह्णतोप्यन्यान्न समनुजानामीत्यादि यावद्व्युत्सृजामीति पूर्ववद्द्रष्टव्यं । अत्र च ग्रामे वा नगरे वेत्यादिना क्षेत्रतः अल्पं वा बहु वेत्यादिना तु द्रव्यतो अदत्तादानमुक्तमनेन च चतुर्विधमदत्तादानमुपलक्षितमित्यतस्तदभिधातुमाह—

से अदिन्नादाणे चउव्विहे पन्नत्ते तं जहा–दव्वओ खेत्तओ कालओ भावओ । दव्वओ णं अदिन्नादाणे गहणधारणिज्जेसु दव्वेसु, खित्तओ णं अदिन्नादाणे गामे वा नगरे वा अरन्ने वा, कालओ णं अदिन्नादाणे दिया वा राओ वा, भावओ णं अदिन्नादाणे रागेण वा दोसेण वा ॥

नःआगुक्रमदत्तादानं स्तेयं चतुर्विधं प्रज्ञप्तं तद्यथा–द्रव्यतः क्षेत्रतः कालतो भावतः, तत्र द्रव्यतोऽदत्तादानं स्यात्केष्वित्याह–ग्रहणधारणीयेषु द्रव्येषु तत्र गृह्यन्त इति ग्रहणान्युपादानार्हाणि धार्यन्त इति धारणीयानि ततश्च ग्रहणानि च तानि धारणीयानि च ग्रहणधारणीयानि तेषु द्रव्येष्वनेन च धर्म्मास्तिकायादिष्वदत्तादानप्रतिषेधमाह–ग्रहणधारणानर्हत्वाच्चेषामत एवास्यैव द्रव्यविषयमिदमभिहितमत्र आहच–"पढमम्मि सव्वजीवा बीए चरिमे य सव्वदव्वाइं। सेसा महव्वया खलु तदेक्कदेसेण दव्वाणं"। क्षेत्रतोऽदत्तादानं ग्रामे वा नगरे वाऽरण्ये वा अधिकरणभूते भवति। कालतोऽदत्तादानं दिवा वा रात्रौ वा सम्भवति। भावतोऽदत्तादानं रागेण वा मायालोभलक्षणेन द्वेषेण वा क्रोधमानस्वरूपेण। तत्र मायया धूर्तानां, लोभेन वणिक्चौरादीनां, कोपेन नृपादीनां, मानेन चाभिमानयुक्तानामदत्तादानसम्भवो भावनीयः। तथा लोभमन्तरेणादत्तादानासम्भवात् मायादिष्वपि लोभसद्भावो वेदितव्य इति। द्रव्यादिचतुर्भङ्गी पुनरियं–" दव्वओ नामेगे अदिन्नादाणे नो भावओ। भावओ नामेगे नो दव्वओ। एगे दव्वओवि भावओवि। एगे नो दव्वओ नो भावओ। तत्थ अरत्तदुट्ठस्स साहुणो रहिलि अणणुन्नवेऊण तणाइ गिण्हओ दव्वओ अदिन्नादाणं नो भावओ। हरामिति अब्भुज्जयस्स तदसंपत्तीए भावओ नो दव्वओ। एवं चेव संपत्तीए दव्वओवि भावओवि। चरमभङ्गो पुण सुन्नोत्ति॥

जं मए इमस्स धम्मस्स केवलिपन्नत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिप्पहाणस्स अहिरण्णसोवण्णियस्स उवसमप्पभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिस्स कुक्खीसंबलस्स निरग्गिसरणस्स संपक्खालियस्स चत्तदोसस्स गुणग्गाहियस्स निव्वियारस्स निव्वित्तीलक्खणस्स पंचमहव्वयजुत्तस्स असंनिहिसंचयस्स अविसंवाइयस्स संसारपारगामिस्स निव्वाणगमणपज्जवसाणफलस्स पुव्विं अन्नाणयाए असवण-

याए अबोहिए अणभिगमेणं अभिगमेण वा पमाएणं रागदोसपडिबद्धयाए बालयाए मोहयाए मंदयाए किड्डयाए तिगारवगरुययाए चउक्कसाओवगएणं पंचिंदिओवसट्टेणं पडुप्पन्नभारयाए सायासोक्खमणुपालयंतेणं इहं वा भवे अन्नेसु वा भवग्गहणेसु अदिन्नादाणं गहियं वा गाहावियं वा घेप्पंतं वा परेहिं समणुन्नायं तं निन्दामि गरिहामि तिविहं तिविहेणं मणेणं वायाए काएणं अईयं निन्दामि पडुप्पन्नं संवरेमि अणागयं पच्चक्खामि सव्वं अदिन्नादाणं जावज्जीवाए अणिस्सिओहं नेव सयं अदिन्नं गिण्हेज्जा नेवन्नेहिं अदिन्नं गिण्हाविज्जा अदिन्नं गिण्हंतेवि अन्ने न समणुजाणामि तंजहा–अरहन्तसक्खियं सिद्धसक्खियं साहुसक्खियं देवसक्खियं अप्पसक्खियं एवं भवइ भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा एस खलु अदिन्नादाणस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अदुक्खणयाए असोयणयाए अजूरणयाए अतिप्पणयाए अपीडणयाए अपरियावणयाए अणुद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणुचिण्णे परमरिसिदेसिए पसत्थे तं दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए संसारुत्तारणाए त्तिकट्टु उवसंपज्जित्ताणं विहरामि। तच्चे भन्ते महव्वए उवट्ठिओमि सव्वाओ अदिन्नादाणाओ वेरमणं ॥

एतच्च सर्वं सूत्रमदत्तादानाभिलापेन प्राग्वदवसेयं नवरमदत्तहारिणां वधबन्धनदारिद्र्यन्यासहरणादयो दोषा भणनीया इत्युक्तं तृतीयं महाव्रतम् ॥ अधुना चतुर्थमाह—

अरावरे चउत्थे भन्ते महव्वए मेहुणाओ वेरमण सव्व भन्ते मेहुण पच्चक्खामि से दिव्व वा माणुसं वा तिरिक्ख-जोणिय वा नेव सय मेहुण सेविज्जा नेवन्नेहिं मेहुण सेवावेज्जा मेहुण सेवन्तेवि अन्ने न समणुजाणामि जावज्जीवाए तिविह तिविहेणं मणेणं वायाए काएण न करेमि न कारवेमि करन्तपि अन्न न समणुजाणामि तस्स भन्ते पडिक्कमामि निन्दामि गरिहामि अप्पाण वोसिरामि ॥

अथापरस्मिन् चतुर्थे चतुःसख्ये भदन्त महाव्रते मैथुनाद्विरमण जिनेनोक्तमतः सर्वं भदन्त मैथुन मिथुनकर्म प्रत्याख्यामि । सेशि तद्यथा–दैव वा मानुष वा तैर्यग्योन वेत्यनेन द्रव्यपरिग्रहः । तत्र देवानामिद दैव अप्सरोऽमरसवन्धीति भावः । मनुष्याणामिद मानुष स्त्रीपुरुषसत्कमित्यर्थ' । तिर्यग्योनौ भव तैर्यग्योनं वडवाश्वादिप्रभवमित्यर्थः । नेव सयमित्यादि गतार्थं । अत्र च दैव वेत्यादिना द्रव्यतो मैथुनमुक्त, अनेन च चतुर्विध मैथुनमुपलक्षितमित्यतस्तद्वक्तुकाम आह–

से मेहुणे चउव्विहे पन्नत्ते तजहा–दव्वओ खित्तओ कालओ भावओ। दव्वओ णं मेहुणे रूवेसु वा रूवसहगएसु वा। ण खित्तओ ण मेहुणे उड्ढलोए वा अहोलोए वा तिरियलोए वा । कालओ ण मेहुणे दिया वा राओ वा। भावओ ण मेहुणे रागेण वा दोसेण वा ॥

तन्मैथुन चतुर्विध प्रज्ञप्तं, तद्यथा–द्रव्यतः १, क्षेत्रतः २, कालतः ३, भावत. ४। तत्र द्रव्यतो मैथुन रूपेषु वा रूपसहगतेषु वा द्रव्येषु भवति, तत्र रूपाणि निर्जीवानि प्रतिमारूपाण्युच्यन्ते, रूपसहगतानि तु सजीवानि पुरुषाङ्गनाशरीराणि । भूषणविकलानि वा रूपाणि, भूषणसहितानि तु रूपसहगतानि । क्षेत्रतो मैथुन ऊर्द्धलोके वा मेरुवनषण्डसौधर्मेशानादिषु सभवति, अधोलोके वा अधो

ग्रामभवनपतिभवनादिषु, तिर्यग्लोके वा द्वीपसमुद्राचलादिषु, अथ ऊर्द्ध्वाधस्तिर्यग्लोकपरिज्ञानार्थमिदमुच्यते–'इहोर्द्ध्वाधश्चतुर्दश-रज्जुप्रमाणस्य सर्वतो वृत्तस्य तिर्यक्स्थाने विचित्रमानस्य वैशाखस्थानस्थितकटिस्थकरयुग्मपुरुषाद्याकृतेर्लोकस्य बहुमध्यदेशभागे उर्द्ध्वाधोऽष्टादशयोजनशतमानस्तिर्यग्लोक उच्यते, तस्य च बहुमध्ये अंगुलासंख्येयभागमात्रलोकाकाशप्रतरा अलोकेन संवर्त्तिताः सर्वक्षुल्लकप्रतराः सर्वतो रज्जुप्रमाणाः सन्ति तेषां बहुमध्यवर्त्तिनो द्वयोः क्षुल्लकप्रतरयोर्बहुमध्ये जम्बूद्वीपे रत्नप्रभापृथिव्या बहुसमभू-भागे मन्दरस्य बहुमध्ये अष्टप्रदेशो रुचकः समस्ति, यतोऽयं दिग्विभागः प्रवृत्त इति, एतत्तिर्यग्लोकमध्यं, एतस्मात्तिर्यग्लोकमध्या-द्रज्जुप्रमाणक्षुल्लकप्रतरेभ्य उपरि तिर्यगसङ्ख्येयांगुलभागवृद्धिरुपरिमुखं चांगुलासंख्येयभागारोह एवास्ति, एवं तिर्यगुपरि चांगुलासं-ख्येयभागवृद्ध्या तावल्लोकवृद्धिर्ज्ञातव्या यावदूर्द्ध्वलोकमध्यं, ततः पुनस्तेनैव क्रमेण संवर्त्तः कर्त्तव्यो यावदुपरि लोकान्तो रज्जुप्रमाण इति । तिर्यग्लोकमध्यरज्जुप्रमाणक्षुल्लकप्रतरेभ्योऽप्यधस्तात् तिर्यगंगुलासंख्येयभागवृद्धिरधोवगाहेनाप्यंगुलासंख्येयभागवृद्धिरेवं कर्त्त-व्या, एवमधोलोकस्तावद्वर्द्धयितव्यो यावदधोलोकान्तो द्विधापि सप्तरज्जुप्रमाणो जायते इति । इह च वृद्धा वदन्ति–'उपरिमुखादधो-मुखाच्चांगुलासंख्येभागाल्लघुतरस्तिर्यगंगुलासंख्येयभागो द्रष्टव्योऽन्यथा लोकबहुत्वप्राप्तेरिति' ये च तिर्यगुपर्यधश्च तुल्यमेवांगुलासंख्ये-यभागं वृद्धौ वर्णयन्ति, ये च तिर्यगुपर्यधश्च प्रतिप्रतरं प्रदेशवृद्ध्या लोकं वर्द्धयन्ति तदभिप्रायं न विद्मो न चायमागमेऽप्यस्माभिर्दृष्टः सम्यग्विचिन्त्यं चैतदिति । एवं च स्थिते रुचकादधो यावन्नव योजनशतानि तावत् तिर्यग्लोकः परतस्त्वधोलोक इति, तथा रुचका-दुपरियावन्नव योजनशतानि यावत् ज्योतिश्चक्रस्योपरितलमित्यर्थः तावत्तिर्यग्लोकः ततः पर (मु) उर्ध्वलोक इति । कृतं प्रसंगेन प्रकृतमुच्यते । कालतो मैथुनं दिवा वा रात्रौ वा स्यात् । भावतो मैथुनं रागेण वा मायालोभलक्षणेन, द्वेषेण वा कोपमानलक्षणेन, तत्र

मायया मैथुनसम्भवो यथा—

एगो साहू एगाए अगारीए सज्झायसंबन्धो बाहुल्लयाये गच्छस्स परियारणाविरहमलहन्तो नियडिए गुरु विन्नवेइ जया ' भयव दुक्खइ मे गाढमुदर ता अणुजाणेह जेण पच्चासन्नगिहे गन्तूण अहापवत्तग्गिणा पयावेमि ' गुरुणावि अविन्नायपरमत्थेण विसज्जिओ गन्तूण आगारिं पडिसेवित्ता समागओ भणइ ' उवसन्ता मे वेयणत्ति '। लोमेन तु मैथुनसम्भवो अमुनोदाहरणेन भावनीयः—

' तगराए नयरीए अरिहमित्तो नाम आयरिओ विहरइ तस्स य समीवे दत्तो नाम वाणियओ भद्दाए भारियाए पुत्तेण य अरहन्नएण सद्धिं पव्वइओ, सो त खुड्डग न कयावि भिक्खाए हिंडावेइ, पढमालियाईहिं पोसइ, एव च सो सुकुमालो जाओ, साहूण य अप्पत्तिय ज सो भिक्खाइसु न हिण्डइ, पर खन्तोवरोहेण न तरन्ति किञ्चि भणिउ, अन्नया सो खन्तो कालगओ, तओ साहुहिं तस्स दो तिन्नि दिवसे भत्त दाउ भिक्खाए ओयारिओ, सो सुकुमालसरीरो गिम्हे उवरिं हेट्ठा य डज्झन्तो पस्सेयजलकिलिन्नगत्तो अतीव तण्णाभिभूओ छायाए वीसमन्तो एगाए पउत्थवइयाए वणियमहिलाए नियभवणट्ठियाए दिट्ठो, ओरालसुकुमालसरीरोत्ति काउ तीसे (तहिं) अणुराओ जाओ,तओ चेडीए सद्दावित्ता पुच्छिओ—' किं मग्गसित्ति ' तेणुत्त—' भिक्खन्ति ' तओ अणाए दवाविया से य मोयगा, तओ पुणो पुच्छिओ कि निमित्त तुम धम्ममिम करेसि?, सो भणई ' सुहनिमित्त ' तओ तीए जपिय जइ एव तो मए चेव समाण भोगे भुजाहि, मा हत्थगय सुह परिच्चइऊण अणागयसन्दिद्धसुहासाए अप्पाण किलेसेहेत्ति ' सोवि उण्हेण तज्जिओ उवसग्गिज्जन्तो य पडिभग्गो पच्छन्ने ठिओ भोगे भुजइ, साहूहि य मग्गिओ, न दिट्ठो, पच्छा से माया उम्मतिया जाया पुत्तसोगेण नयर भमन्ती अरहन्नय विलवन्ती ज जहिं पासइ त तहिं सव्व भणइ अरहन्नओ दिट्ठोत्ति, एव विलवमाणी भमइ, जावन्नया तेणोलोयण-

गएण दिट्ठा, पच्चभिन्नाया, तओ ताहे चेव उयरित्ता पाएसु पडिओ, सावि तं पेच्छिऊण ताहे चेव सत्थचित्ता जाया, ताए भन्नइ– 'पुत्तय पव्वयाहि मा तित्थयराणमाणं विराहिय दोगगाइं जाहिसि', सो भणइ–'अम्मो न तरामि दीहकालं संजमं परिवालिउं जइ परं गहियसञ्जमो खिप्पमणसणविहिणा कालं करेमि' मायाए भणियं–'एवं करेहि, मा पुत्तय ! असञ्जओ भविय संसारसागरे निम्मज्जाहि यतः–"वरं पवेट्ठुं जलियं हुयासणं, न यावि भग्गं चिरसञ्चियं वयं। वरं हि मच्चू सुविसुद्धकम्मुणो न यावि सीलक्खलियस्स जीवियन्ति" पच्छा सो गुरुसगासे आलोइय पडिकन्तो समारोवियपञ्चमहव्वयभरो कयाणसणो भविय ताहे चेव तत्तसिलायले पाओवगमणं करेइ, मुहुत्तेण सुकुमालसरीरोत्ति नवणियपिण्डो व्व उण्हेण विलीणोत्ति। कोपेन पुनर्यथा एगो साहू गामन्तराओ गुरुसमीवमागच्छन्तो अन्तरा परिव्वाइयं संमुहमिन्तिं पेच्छिय एयाए पवयणपच्चयाए वयम्भञ्जामित्ति पदुट्ठचित्तो तत्थेव तं पडिसेवित्ता गुरुसगासमागओ कहेइ–जहा 'मए दुट्ठपरिव्वाइयाए वयं भगन्ति'। मानेन पुनर्यथा–'एगंमि गच्छे एगो तरुणसमणो मणोहरागिई, तं दट्ठुमेगा तरुणमहिला अज्झोववन्ना चिन्तेइ–'अहो ण्हाणुव्वट्टणाइविभूसावियारविरयस्सावि इमस्स साहुस्स लावन्नसिरित्ति' तओ सा तं बहुसो ओभासेइ, न य सो तमभिलसइ, तओ अन्नया तीए भणियं जहा–'फुडं तुमं नपुंसगोसि जो दढाणुरत्तचित्तं मणहरजोव्वणंपि मं न माणेसि' तओ साहुणावि संजायाहङ्कारेण सा दढं पडिसेवियत्ति। इह च वेदोदयप्रभवत्वान्मैथुनप्रवृत्तेर्वेदोदयसत्ता सर्वत्र समवसेयेति। द्रव्यादिचतुर्भङ्गी पुनरियं दव्वओ नामेगे मेहुणे नो भावओ। भावओ नामेगे नो दव्वओ। एगे दव्वओवि भावओवि। एगे नो दव्वओ नो भावओ। तत्थ अरत्तदुट्ठाए इत्थियाए बला परिभुज्जमाणीए दव्वओ मेहुणे नो भावओ। मेहुणसन्नापरिणयस्स तदसंपत्तीए भावओ नो दव्वओ। एवं चेव संपत्तीए दव्वओवि भावओवि। चउत्थो पुण सुन्नोत्ति।

ज मए इमस्स धम्मस्स केवलिपन्नत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खतिप्पहाणस्स अहिरण्णसोवन्नियस्स उवसमपभवस्स नववभचेरगुत्तस्स अपयमाणस्स भिक्खाविन्तिस्स कुक्खीसबलस्स निरग्गि-सरणस्स सपक्खालियस्स चत्तदोसस्स गुणग्गाहिस्स निव्वियारस्स निवित्तीलक्खणस्स पचमहव्वयजुत्तस्स असनिहिसचयस्स अविसवाइयस्स ससारपारगामिस्स निव्वाणगमणपज्जवसाणफलस्स पुवि अण्णाणयाए असवण-याए अवोहिए अणभिगमेण अभिगमेण वा पमाएण रागदोसपडिवद्धयाए वालयाए मोहयाए मदयाए किड्डयाए तिगारवगरुयाए चउक्कसाओवगएण पञ्चिन्दियवसट्टेण पडुप्पन्नभारियाए सायासोक्खमणुपालयतेण इह वा भवे अन्नेसु वा भवगहणेसु मेहुण सेविय वा सेवाविय वा सेवज्जिन्त वा परेहिं समणुन्नाय त निन्दामि गरिहामि तिविह तिविहेण मणेण वायाए काएण अईय निन्दामि पडुपन्न सवरेमि अणागय पचक्खामि सव्व मेहुण जावज्जीवाए अणिस्सिओ ह नेव सय मेहुण सेविज्जा नेवन्नेहिं मेहुण सेवाविज्जा मेहुण सेवन्तेवि अन्ने न समणु-जाणामि, तजहा-अरहन्तसक्खिय सिद्धसक्खिय साहुसक्खिय देवसक्खिय अप्पसक्खियं एव भवइ भिक्खूवा भिक्खुणी वा संजयविरयपडिहयपचक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागर-माणे वा एस खलु मेहुणस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए (पारगामिए) सव्वेसि पाणाणं सव्वेसिं भूयाण सव्वेसि जीवाण सव्वेसि सत्ताण अदुक्खणयाए असोयणयाए अजूरणयाए अतिप्पणयाए अपीडणयाए अपरियावणियाए अणोद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणुचिण्णे परमरिसिदेसिए पसत्थे त दुक्ख-

याए कम्मक्खयाए मोक्खाए बोहिलाभाए संसारुत्तारणाए त्तिकट्टु, उवसंपज्जित्ताणं विहरामि। चउत्थे भंते महव्वए उवट्ठिओमि सव्वाओ मेहुणाओ वेरमणं ॥

एतत्सकलमपि सूत्रं गतार्थम्। दोषाश्चेहात्रासेविनां वधबन्धनायशःकीर्तिषण्डकत्वबन्ध्यत्ववैधव्यादयो वाच्याः। इत्युक्तं चतुर्थं महाव्रतमधुना पञ्चममाह—

अहावरे पंचमे भन्ते महव्वए परिग्गहाओ वेरमणं, सव्वं भन्ते परिग्गहं पचक्खामि, से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमन्तं वा, नेव सयं परिग्गहं परिगिण्हेज्जा नेवन्नेहिं परिग्गहं परिगिण्हाविज्जा परिग्गहं परिगिन्हन्ते वि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि तस्स भन्ते पडिक्कमामि निन्दामि गरिहामि अप्पाणं वोसिरामि ॥

अथापरस्मिन् पञ्चमे भदन्त! महाव्रते किमित्याह—परिगृह्यते स्वीक्रियत इति परिग्रहो धनधान्यहिरण्यादिस्तस्माद्विरमणं भगवतोक्तमतः सर्वं भदन्त! परिग्रहं प्रत्याख्यामि। सेत्ति तद्यथा—अल्पं वा बहु वा अणु वा स्थूलं वा चित्तवद्वा अचित्तवद्वेत्यनेन द्रव्यपरिग्रहः, व्याख्या तु पूर्ववत्, नेन सयमित्याद्यपि पूर्ववदेव। अत्र चाल्पं वेत्यादिना द्रव्यपरिग्रह उक्तः, अनेन चतुर्विधपरिग्रह उपलक्षित इत्यतस्तदभिधानायाह—

से परिग्गहे चउव्विहे पन्नत्ते तंजहा—दव्वओ खित्तओ कालओ भावओ। दव्वओ णं परिग्गहे सच्चित्ताचित्तमीसेसु दव्वेसु, खेत्तओ णं परिग्गहे लोए वा अलोए वा, कालओ णं परिग्गहे दिया वा राओ वा, भावओ णं

परिग्गहे अप्पग्घे वा मग्घे वा रागेण वा दोसेण वा ।

स परिग्रहश्चतुर्विधः प्रज्ञप्तस्तद्यथा–द्रव्यत' ४, तत्र द्रव्यतः सर्वद्रव्येषु आकाशादिसर्वपदार्थेषु यदाह चूर्णिकारः–"गामघरङ्गणाइपएसेसु ममीकरणाओ आगासपरिग्गहो, चङ्कमणपएसममीकारकरणाओ धम्मदव्वपरिग्गहो, ठाणनिसीयणतुयट्टणपएसममीकारकरणाओ अधम्मपरिग्गहो, मायापिइमाइएसु जीवेसु ममत्तकरणाओ जीवदव्वओ परिग्गहो, हिरण्णसुवन्नाइएसु दव्वेसु ममत्तकरणाओ पोग्गलदव्वपरिग्गहो, सीउण्हवरिसकालेसु रिउछके वा अन्नयरमुच्छियस्स कालपरिग्गहोत्ति" क्षेत्रतः परिग्रहो लोके वाऽलोके वा लोकालोकाकाशममत्वकरणादितिभावः । सव्वलोएत्ति क्वचित्पाठः सङ्गतश्चायं ग्रन्थान्तरैः सह सवादात् । कालत' परिग्रहो दिवा वा रात्रौ वा दिनरात्र्यभिलाषादित्यर्थः, पठ्यते च-"रयणिमभिसारियाओ, चोरा परदारिया य इच्छन्ति । तालायरा सुभिक्खबहुधन्ना केइ दुभिक्खं" दिनरात्र्यधिकरणविवक्षया वा कालपरिग्रहो भावनीय. । भावतः परिग्रहोऽल्पार्घे वाऽल्पमूल्ये महार्घे वा बहुमूल्ये द्रव्ये रागेण वाभिष्वङ्गलक्षणेन द्वेषेण वा अप्रीतिलक्षणेन अन्यद्वेषेणेत्यर्थ' । द्रव्यादिचतुर्भङ्गी पुनरिय दव्वओ नामेगे परिग्गहे नो भावओ । भावओ नामेगे नो दव्वओ । एगे दव्वओवि भावओवि । एगे नो दव्वओ नो भावओ । तत्थ अरत्तदुट्ठस्स धम्मोवगरण दव्वओ परिग्गहो नो भावओ । मुच्छियस्स तदसपत्तीए भावओ नो दव्वओ । एव चेव सपत्तीए दव्वओवि भावओवि । चरमभङ्गो पुण सुन्नो ।

जं मए इमस्स धम्मस्स केवलिपन्नत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिप्पहाणस्स अहिरन्नसोवण्णियस्स उवसमप्पभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिस्स कुक्खीसंबलस्स निरग्गि-सरणस्स संपक्खालियस्स चत्तदोसस्स गुणगाहिस्स निव्वियारस्स निवित्तिलक्खणस्स पंचमहव्वयजुत्तस्स असंनिहिसञ्चयस्स अविसंवाइयस्स संसारपारगामिस्स निव्वाणगमणपज्जवसाणफलस्स पुव्विं अन्नाणयाए असवण-याए अबोहिए अणभिगमेणं अभिगमेण वा पमाएणं रागदोसपडिबद्धयाए बालयाए मोहयाए मन्दयाए किड्डयाए तिगारवगरुयाए चउक्कसाओवगएणं पञ्चिन्दिओवसट्टेणं पडुप्पन्नभारियाए सायासोक्खमणुपालयंतेणं इहं वा भवे अन्नेसु वा भवग्गहणेसु परिग्गहो गहिओ वा गाहाविओ वा घिप्पंतो वा परेहिं समणुन्नाओ तं निन्दामि गरिहामि तिविहं तिविहेणं मणेणं वायाए काएणं अईयं निन्दामि पडुपन्नं संवरेमि अणागयं पच्चक्खामि सव्वं परिग्गहं जावज्जीवाए अणिस्सिओहं नेव सयं परिग्गहं परिगिण्हेज्जा नेवन्नेहिं परिग्गहं परिगिण्हावेज्जा परिग्गहं परिगिण्हंते वि अन्ने न समणुजाणामि, तंजहा-अरहन्तसक्खियं, सिद्धसक्खियं, साहुसक्खियं, देवसक्खियं, अप्पसक्खियं, एवं भ-वइ भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा एस खलु परिग्गहस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए (पारगामिए) सव्वेसिं पा-णाणं, सव्वेसिं भूयाणं, सव्वेसिं जीवाणं, सव्वेसिं सत्ताणं, अदुक्खणयाए, असोयणयाए, अजूरणयाए, अतिप्पणयाए, अपीडणयाए, अपरियावणयाए, अणोद्दवणयाए; महत्थे महागुणे महाणुभावे महापुरिसाणुचिण्णे परमरिसिदेसिए

पसत्थे तं दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए ससारुत्तारणाए त्तिकट्टु, उवसंपज्जित्ताणं विहरामि। पञ्चमे भन्ते महव्वए उवट्ठिओमि सव्वाओ परिग्गहाओ वेरमणं।

एतदपि सूत्र पूर्ववद्व्याख्येय, दोषाश्चेह परिग्रहिणा वधवन्धनमारणदु खितत्वनरकगमनादयो वाच्याः। इत्युक्तं पञ्चम महाव्रत साम्प्रत षष्ठ व्रतमाह—

अहावरे छट्ठे भन्ते वए राईभोयणाओ वेरमण, सव्व भन्ते राईभोयण पच्चक्खामि, से असण वा, पाण वा, खाइम वा, साइम वा, नेव सय राइ भुजेज्जा नेवन्नेहिं राइ भुञ्जावेज्जा राइ भुञ्जन्ते वि अण्णे न समणुजाणामि जावज्जीवाए तिविह तिविहेण मणेण वायाए काएण न करेमि न कारवेमि करतंपि अन्न न समणुजाणामि तस्स भन्ते पडिक्कमामि निन्दामि गरिहामि अप्पाण वोसिरामि।

अथापरस्मिन् षष्ठे भदन्त! व्रते किमित्याह–रात्रिभोजनात् रात्रौ गृह्णाति रात्रौ भुक्ते। रात्रौ गृह्णाति दिवा भुक्ते। दिवा गृह्णाति रात्रौ भुक्ते। दिवा गृह्णाति दिवा भुक्ते सनिधिपरिभोगे। इत्येवविधभङ्गचतुष्कस्वरूपान्निशाभ्यवहाराद्विरमणं भगवतोक्तमतः सर्वं भदन्त! रात्रिभोजन प्रत्याख्यामि, तद्यथा–असन वा पानं वा खाद्य वा स्वाद्य वा इत्यनेन द्रव्यपरिग्रहः। तत्राश्यत इत्यशनमोदनादि, पीयते इति पान मृद्वीकापानादि, खाद्यत इति खाद्यं खर्जूरादि, स्वाद्यत इति स्वाद्य ताम्बूलादि। एतच्च नैव स्वय रात्रौ भुञ्जे, नैवान्यै रात्रौ भोजयामि, रात्रौ भुञ्जानानप्यन्यान्न समनुजानामीत्येतत् यावज्जीवमित्यादि च भावार्थमधिकृत्य पूर्ववत्। अत्राशन वेत्यादिना द्रव्यतो रात्रिभोजनमुक्त, अनेन च चतुर्विध रात्रिभोजनमुपलक्षितम् इत्यतस्तदभिधातुमाह—

से राईभोयणे चउव्विहे पन्नत्ते तंजहा–दव्वओ, खेत्तओ, कालओ, भावओ। दव्वओ णं राईभोयणे, असणे वा, पाणे वा, खाइमे वा, साइमे वा, खित्तओ णं राईभोयणे–सययखित्ते, कालओ णं राईभोयणे–दिया वा राओ वा, भावओ णं राईभोयणे, तित्ते वा, कडुए वा, कषाए वा, अंबिले वा, महुरे वा, लवणे वा, रागेण वा, दोसेण वा।

तद्रात्रिभोजनं चतुर्विधं प्रज्ञप्तं तद्यथा–द्रव्यतः ४, तत्र द्रव्यतो रात्रिभोजनं अशने वा पाने वा खाद्ये वा स्वाद्ये वा, क्षेत्रतो रात्रिभोजनं समयेन कालविशेषेणोपलक्षितं क्षेत्रं समयक्षेत्रमर्द्धतृतीयद्वीपसमुद्रलक्षणं तस्मिन् संभवति, न परतः, मनुष्यलोकप्रसिद्धदिनरजन्यभावात् , कालतो रात्रिभोजनं दिवा वा सन्निधिपरिभोग इत्यर्थः रात्रौ वा रजन्यां वा, भावतो रात्रिभोजनं भवति केत्याह–तिक्ते वा चिर्भिटिकादौ, कटुके वा आर्द्रकतेमनादौ, कषाये वा वल्लादौ, अम्ले वा तक्रारनालादौ, मधुरे वा क्षीरदध्यादौ, लवणे वा प्रकृतिक्षारे तथाविधजलशाकादौ, लवणोत्कटे वा अन्यस्मिन् द्रव्ये, रागेण वाभिष्वङ्गलक्षणेन, द्वेषेण वा अनभिष्वङ्गलक्षणेनेति क्वापीदं पदद्वयं न दृश्यत एव। द्रव्यादि चतुर्भङ्गी पुनरियं–दव्वओ नामेगे राइ भुञ्जई नो भावओ। भावओ नामेगे नो दव्वओ। एगे दव्वओवि भावओवि। एगे नो दव्वओ नो भावओ। तत्थ अणुग्गए सूरिए उग्गओत्ति अत्थमिए वा अणत्थमिओत्ति अरत्तदुट्ठस्स, कारणाओ रयणीए वा भुञ्जमाणस्स दव्वओ राईभोयणं नो भावओ। राईए भुञ्जामित्ति मुच्छियस्स तदसंपत्तीए भावओ नो दव्वओ। एवं चेव संपत्तीए दव्वओवि भावओवि। चउत्थभंगो सुन्नो।

जं मए इमस्स धम्मस्स केवलिपन्नत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिप्पहाणस्स अहिरण्णसोवन्नियस्स उवसमप्पभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिस्स कुक्खीसंबलस्स निरग्गि-

सरणस्स सपक्खालियस्स चत्तदोसस्स गुणगाहियस्स निव्वियारस्स निविचित्तिलक्खणस्स पञ्चमहव्वयजुत्तस्स असनिहिसञ्चयस्स अविसवाईस्स ससारपारगामियस्स निव्वाणगमणपज्जवसाणफलस्सपुव्विं अन्नाणयाए असवणयाए अबोहिए अणभिगमेण अभिगमेण वा पमाएण रागदोसपडिबद्धयाए बालयाए मोहयाए मन्दयाए किड्डयाए तिगारवगरुययाए चउक्कसाओवगएण पञ्चिन्दिओवसट्टेण पडिपुन्नभारियाए सायासोक्खमणुपालयन्तेणइ ह वा भवे अन्नेसु वा भवग्गहणेसु राईभोयण भुजिय वा भुञ्जाविय वा भुञ्जन्तं वा परेहिं समणुन्नाय त निन्दामि गरिहामि तिविह तिविहेण मणेण वायाए काएण अईय निन्दामि पडुप्पन्न सवरेमि अणागय पच्चक्खामि सव्व राईभोयणं जावज्जीवाए अणिस्सिओह नेव सय राई भुञ्जेज्जा नेवन्नेहिं राई भुञ्जावेज्जा राई भुञ्जते वि अन्ने न समणुजाणामि, तंजहा-अरिहन्तसक्खिय, सिद्धसक्खिय, साहुसक्खिय, देवसक्खिय, अप्पसक्खियं, एव भवइ भिक्खू वा भिक्खुणी वा सजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा एस खलु राईभोयणस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए सव्वेसिं पाणाणं, सव्वेसिं भूयाण, सव्वेसि जीवाणं, सव्वेसिं सत्ताणं, अदुक्खणयाए, असोयणयाए, अजूरणयाए, अतिप्पणयाए, अपीडणयाए, अपरियावणयाए, अणोद्दवणयाए, महत्थे महागुणे महाणुभावे महापुरिसाणुचिन्ने परमरिसिदेसिए पसत्थे त दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए ससारुत्तारणाए त्तिकट्टु, उवसपज्जित्ताणं विहरामि।

छट्ठे भन्ते वए उवट्ठिओमि सव्वाओ राईभोयणाओ वेरमणं।

एतत्सूत्रं सकलमपि प्राग्वत्, एतच्च रात्रिभोजनव्रतं प्रथमचरमतीर्थंकरतीर्थयोः ऋजुजडवक्रजडपुरुषापेक्षया मूलगुणत्वख्यापनार्थं महाव्रतोपरि पठितं, मध्यमतीर्थंकरतीर्थे पुनः ऋजुप्राज्ञपुरुषापेक्षयोत्तरगुणवर्ग्ग इति। दोषाश्चेह रात्रिभोजिनां पिपीलिकाशलभादि-सत्त्वविनाशादयो वाच्याः। इत्युक्तं षष्ठं व्रतमथ समस्तव्रताभ्युपगमख्यापनायाह—

**इच्चेयाइं पञ्च महव्वयाइं राईभोयणवेरमणछट्ठाइं अत्तहियट्ठयाए उवसंपज्जित्ताणं विहरामि।**

इत्येतान्यनन्तरोदितानि पञ्च महाव्रतानि रात्रिभोजनविरमणषष्ठानि किमित्याह—अत्तहियट्ठयाएत्ति आत्मने जीवाय हित आत्महितो मोक्षस्तदर्थं आत्महितार्थाय, अनेनान्यार्थं तत्त्वतो व्रताभावमाह—तदभिलाषानुमत्या हिंसादावनुमत्यादिभावात्। उप सामीप्येन संप-द्यांगीकृत्योपसम्पद्य विहरामि सुसाधुविहारेण वर्त्तेऽहं, तदभावेऽङ्गीकृतानामपि व्रतानामभावप्रसंगादिति। कृता महाव्रतोच्चारणा, साम्प्रतं महाव्रतानामेव यथाक्रममतिचारानुपदर्शयितुमाह—

**अप्पसत्था य जे जोगा परिमाणा य दारुणा। पाणाइवायस्स वेरमणे एस वुत्ते अइक्कमे। १। रूपकम्।**

अप्रसस्ता हिंसाहेतुत्वादसुन्दराश्चशब्दो वक्ष्यमाणपदापेक्षया समुच्चयार्थः, ये केचन योगा अयतचंक्रमणभाषणादयो व्यापाराः, परिणामाश्च भूतघाताद्याध्यवसायाश्च पूर्वपदापेक्षया समुच्चये, दारुणा रौद्राः, प्राणातिपातस्य प्राणि(प्राण)प्रहारस्य, विरमणे निवृत्तावे-षोऽयमुक्तो भगवद्भिः प्रतिपादितोऽतिक्रमोऽतिचार इति मत्वा तान् परिहरेदितिभावः। एवमुत्तरत्रापि भावना कार्या। द्वितीयव्रत-मधिकृत्याह—

**तिव्वरागा य जा भासा तिव्वदोसा तहेव य। मुसावायस्स वेरमणे एस वुत्ते अइक्कमे ॥ २ ॥**

तीव्ररागा उत्कटविषयानुबन्धा या काचिद्भाष्यत इति भाषा भारती, तीव्रद्वेषा उग्रमत्सरा, तथैव चेति समुच्चयपूरणार्थान्यव्ययानि मृषावादस्य वितथभाषणस्य, विरमणे विरतावेषोऽय उक्तो जिनैर्गदितो, ऽतिक्रमो देशभङ्गः सर्वभङ्गो वेति भावः। तृतीयव्रतमाश्रित्याह—

उग्गहं च अजाइत्ता अविदिण्णे य उग्गहे। अदिण्णादाणस्स वेरमणे एस वुत्ते अइक्कमे ॥ ३ ॥

अवगृह्यत इत्यवग्रह आश्रयस्तमयाचित्वा तस्मात् स्वामिनः स्वामिसन्दिष्टाद्वा सकाशादननुज्ञाप्य तत्रैव यदवस्थानमिति गम्यते, तथा अविदत्ते वाऽवग्रहस्वामिनाऽवितीर्णेऽवग्रहे प्रतिनियताऽवग्रहमर्यादाया बहिरित्यर्थः यच्चेष्टनमितिवाक्यशेषः। अदत्तादानस्य विरमणे एस उक्तोऽतिक्रमो विराधनेत्यर्थ.। चतुर्थव्रतमङ्गीकृत्याह—

सद्दारूवारसागन्धाफासाणं पवियारणा। मेहुणस्स वेरमणे एस वुत्ते अइक्कमे ॥ ४ ॥

आकारस्येहागमिकत्वात् शब्दाश्च प्रक्रमाद्वेणुवीणाकामिनीसमुत्थकलध्वनयः, एव रूपाणि च ललनादिमनोहराकृतयः, रसाश्च मधुरादिविशिष्टास्वादाः, गन्धाश्च स्रक्चन्दनादिदिव्यपरिमलाः, स्पर्शाश्च मृदुतूलीयोषिदङ्गादिस्पर्शास्ते तथा, तेषां प्रविचारणा रागात्प्रतिसेवना, मैथुनस्याब्रह्मासेवनस्य, विरमणे एष उक्तोऽतिमोऽतिचारस्तस्मादेतान्न कुर्यादिति हृदयमिति। परिग्रहव्रतमुररीकृत्याह—

इच्छा मुच्छा य गेही य कङ्खा लोभे य दारुणे। परिग्गहस्स वेरमणे एस वुत्ते अइक्कमे ॥ ५ ॥

इच्छा मूर्च्छा च गृद्धिश्च काङ्क्षा लोभश्च दारुण इत्येकार्थानि अबुधबोधनायोपन्यस्तानि। अथवा—इच्छा अनागतान्यतरार्थप्रार्थना, मूर्च्छा च हृतातीतनष्टपदार्थशोचना गृद्धिश्च विद्यमानपरिग्रहप्रतिबन्धः, अप्राप्तविविधार्थप्रार्थना काङ्क्षा तद्रूपो लोभः काङ्क्षालोभश्च,

चशब्दः समुच्चये किंविशिष्टो? दारुणस्तीव्रः, परिग्रहस्य विरमणे एष उक्तोऽतिक्रम इति पूर्ववत् ॥ षष्ठव्रतमुररीकृत्याह—

अईमत्ते य आहारे सूरखेत्ते य संकिए । राईभोयणस्स वेरमणे एस वुत्ते अइक्कमे ॥ ६ ॥

साधूनां हि कवलापेक्षया भोजनमानमिदं यदुत "बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलियाए अट्ठावीसं भवे कवला" षड्भागकल्पितजठरापेक्षया त्विदं—"अद्धं असणस्स सव्वंजणस्स कुज्जा दवस्स दो भागे । वाउपवियारणट्ठा छब्भागं ऊणगं कुज्जा" ततश्चास्माच्छास्त्रीयभोजनप्रमाणादधिकोऽतिमात्रश्च पूर्ववदाहारो भोजनं भुक्त इति गम्यते, दिवापि हि समधिकभोजने कृते रात्रौ भुक्तान्नगन्धोद्गाराः प्रजायन्ते, वमनं वा कदाचित्, तत्रच रात्रिभोजनदोषः समुद्गिलितगलने च प्रभूततरा दोषा इति, सूरस्यादित्यस्य क्षेत्रम् उदयास्तलक्षणं नभःखण्डं सूरक्षेत्रं तस्मिंश्च शङ्किते उदयक्षेत्रमागतो वा न वा, अस्तदेशं प्राप्तो वा नवा दिनकर इत्यारेकिते आहारो भुक्त इति वर्त्तते । रात्रिभोजनस्य विरमणे उक्तोऽतिक्रम इति व्याख्यातमेव दर्शिता महाव्रतेष्वतिचाराः । साम्प्रतं यथा तान्येवातिचाररहितानि परिपालितानि भवन्ति, तथा दर्शयितुमाह—

दंसणनाणचरित्ते अविराहित्ता ठिओ समणधम्मे । पढमं वयमणुरक्खे विरया मो पाणाइवायाओ ॥ १ ॥
दंसणनाणचरित्ते अविराहित्ता ठिओ समणधम्मे । बीयं वयमणुरक्खे विरया मो मुसावायाओ ॥ २ ॥
दंसणनाणचरित्ते अविराहित्ता ठिओ समणधम्मे । तइयं वयणमणुरक्खे विरया मो अदिन्नादाणाओ ॥ ३ ॥
दंसणनाणचरित्ते अविराहित्ता ठिओ समणधम्मे । चउत्थं वयणमणुरक्खे विरया मो मेहुणाओ ॥ ४ ॥

दसणनाणचरित्ते अविराहित्ता ठिओ समणधम्मे । पञ्चम वयमणुरक्खे विरया मो परिग्गहाओ ॥ ५ ॥

दसणनाणचरित्ते अविराहित्ता ठिओ समणधम्मे । छट्ट वयमणुरक्खे विरया मो राईभोयणाओ ॥ ६ ॥

दर्शन च सम्यग्दर्शन ज्ञान चाभिनिबोधिकादि चारित्र च सामायिकादि दर्शनज्ञानचारित्राणि कर्म्मतापन्नानि, अविराध्य अखण्डितानि परिपाल्य, विराधना च ज्ञानदर्शनयोः प्रत्यनीकतादिलक्षणा पञ्चविधा यदाह–"नाणपडिणीयनिह्नवअच्चासायणतदन्तराय च। कुणमाणस्सइयारो नाणविसवायजोग च" ॥ तत्र ज्ञानप्रत्यनीकता पञ्चविधज्ञाननिन्दया तद्यथा–आभिनीबोधिकज्ञानमशोभन यतस्तदवगत ज्ञान कदाचिदन्यथेति, श्रुतज्ञानमपि शीलविकलस्याकिञ्चित्करत्वादशोभनमेव, अवधिज्ञानमप्यरूपिद्रव्यगोचरत्वादसाधु, मनःपर्यायज्ञानमपि मनुष्यलोकावधिपरिच्छिन्नगोचरत्वादशोभन, केवलज्ञानमपि समयभेदेन दर्शनज्ञानप्रवृत्तेरेकसमये अकेवलत्वादशोभनमिति । दर्शनप्रत्यनीकता तु क्षायिकदर्शनिनोऽपि श्रेणिकादयो नरकमुपगता इत्यत' किं दर्शनेनेति निन्दया । निह्नवो व्यपलापः, स च ज्ञानस्यान्यसकाशेऽधीतमन्य व्यपदिशतो जायते, दर्शनस्यापि सम्मत्यादिदर्शनप्रभावकशास्त्राण्यधिकृत्यैवमेव द्रष्टव्यम् । अत्याशातना तु ज्ञानस्य "काया वया य ते चिय ते चेव पमाय अप्पमाया य। मोक्खाहिगारियाण जोइसजोणीहिंकि कज्ज" दर्शनस्य तु किमेभि' समत्यादिभि कलहशास्त्रैरिति । अन्तराय द्वयोरपि कलहास्वाध्यायिकादिभि' करोति । ज्ञानविसवादयोगोऽकालस्वाध्यायादिना दर्शनविसवादयोगस्तु शङ्काकाङ्क्षादिनेति । चारित्रविराधना पुनः सावद्ययोगानुमत्यादिलक्षणा विचित्रेति । एतान्यविराध्य किमित्याह–स्थित' समारूढः सन् क्वेत्याह—श्रमणधर्मे श्रमणाना साधूना धर्म्मः क्षान्त्यादिलक्षणः समाचारः तस्मिन् किं करोमीत्याह–प्रथममाद्य व्रत यमम् , अणुरक्खेत्ति अनुरक्षामि सर्वातिचारविरहित पालयामि किंविशिष्ट इत्याह–विरया मोत्ति वचनस्य

व्यत्ययाद्विरतोऽस्मि निवृत्तोऽहं कस्मात्प्राणातिपाताज्जीववधादिति । एवमन्यदपि द्वितीयादिव्रताभिलापिसूत्रपञ्चकमेतदनुसारेण समवसेयमिति । अथ प्रकारान्तरेणापि महाव्रतरक्षणमभिधातुमाह—

आलयविहारसमिओ जुत्तो गुत्तो ठिओ समणधम्मे । पढमं वयमणुरक्खे विरया मो पाणाइवायाओ ॥ १ ॥

आलयविहारसमिओ जुत्तो गुत्तो ठिओ समणधम्मे । बीयं वयमणुरक्खे विरया मो मुसावाया (अलियवयणा)ओ ।२।

आलयविहारसमिओ जुत्तो गुत्तो ठिओ समणधम्मे । तइयं वयणमणुरक्खे विरया मो अदिन्नादाणाओ ॥ ३ ॥

आलयविहारसमिओ जुत्तो गुत्तो ठिओ समणधम्मे । चउत्थं वयमणुरक्खे विरया मो मेहुणाओ ॥ ४ ॥

आलयविहारसमिओ जुत्तो गुत्तो ठिओ समणधम्मे । पञ्चमं वयमणुरक्खे विरया नो परिग्गहाओ ॥ ५ ॥

आलयविहारसमिओ जुत्तो गुत्तो ठिओ समणधम्मे । छट्ठं वयमणुरक्खे विरया मो राईभोयणाओ ॥ ६ ॥

आलयविहारसमिओ जुत्तो गुत्तो ठिओ समणधम्मे । तिविहेण अप्पमत्तो रक्खामि महव्वए पंच ॥७॥ सू० ७ ॥

आलयेत्ति सूचकत्वादालयवर्त्ती, सकलकलङ्कविकलनिलयनिषेवीत्यर्थः । एवं विहारत्ति यथोक्तविहारेण विहरन् । तथा ईर्यादिसमितिपञ्चकेन समितः । तथा युक्तो नाग्न्यास्नानभूशयनादन्तपवनाशिरस्तुण्डमुण्डनभिक्षाभ्रमणक्षुत्पिपासाशीतातपादिसहनगुरूकुलवसनादिलक्षणैः श्रमणगुणैः समन्वितः । तथा गुप्तित्रयेण गुप्तः, स्थितो व्यवस्थितः, श्रमणधर्मे क्षान्त्यादिके यत्यनुष्ठाने, प्रथममाद्यं

१ दन्तधावन ॥

व्रत यमम् अनुरक्षामि सदातिचारविरहित पालयामि, विरयामोत्ति वचनव्यत्ययाद्विरतोऽस्मि(निवृत्तोस्मि) प्राणातिपातात्, इत्येव शेषसूत्राण्यपि द्वितीयादिव्रताभिलापेन नेतव्यानि, नवर सप्तमसूत्रस्योत्तरार्द्धेविशेषो यथा त्रिविधेन मनोवाकायलक्षणेन करणेनाप्रमत्तः सुप्रणिहितः, रक्षामि स्वजीवितमिवादरेण पालयामि महाव्रतान्युक्तलक्षणानि पञ्चेति पञ्चसख्यानीति । इदानीमेकाद्येकोत्तरवृद्धिकाना दशान्ताना शुभाशुभस्थानाना परिवर्जनाङ्गीकारकरणद्वारेण महाव्रतपरिरक्षणाभिधानायाह—

सावज्जजोगमेग मिच्छत्त एगमेव अन्नाण । परिवज्जतो गुत्तो रक्खामि महव्वए पञ्च ॥ १ ॥

अवद्य पाप सहावद्येन यो वर्त्तते स सावद्य. सचासौ योगश्च व्यापारःसावद्ययोगस्तमेकमेकमेद सकलनिन्द्यकर्म्मणा सावद्ययोगत्वाव्यभिचारादिति । तथा मिथ्या इत्येतस्य भावो मिथ्यात्व, मिथ्यात्वमोहनीयकर्मोदयजन्यो विपर्यस्ताध्यवसायरूपो जीवपरिणामस्तन्निमित्तलौकिकदेवतादिवन्दनादिक्रिया च तदेकम् आभिग्रहिकानाभिग्रहिकाभिनिवेशिकानाभोगिकसाशयिकभेदात्पञ्चविधमपि उपाधिभेदतो बहुतरभेदमपि वा विपर्ययसाम्यादेकप्रकारम् । तथा एवत्ति अनुस्वारलोपादेवं मिथ्यात्ववदेकविधमित्यर्थः । अन्नाणंति नञः कुत्सार्थत्वात् कुत्सित ज्ञानमज्ञान सशयविपर्ययानध्यवसायात्मकोज्ञानावरणदर्शनावरणकर्मोदयप्रभवो जीवस्यावबोधपरिणमस्तत्प्रभवग्रन्थविशेषाच्च तदप्युक्तक्रमेणानेकविधमप्यवोधसामान्यादेकविधमिति । किमित्याह—परिवर्ज्जयन् परिहरन् गुप्तो मनोवचन शरिरैः सवृत्तः सन्, रक्षामि सुविशुद्धानि परिपालयामि महाव्रतान्युक्तलक्षणानि पञ्चेति पञ्चसख्यानीति । तथा—



---

१ मप्यवरोध० प्र० ।

अणवज्जजोगमेगं सम्मत्तं एगमेव नाणं तु । उवसम्पन्नो जुत्तो रक्खामि महव्वए पञ्च ॥ २ ॥

अनवद्ययोगं कुशलानुष्ठानम् एकं सकलकुशलानुष्ठानानामनवद्ययोगत्वाव्यभिचारादेकप्रकारं । तथा सम्यक्त्वमिति सम्यक्शब्दःप्रशंसार्थः, सम्यगित्येतस्य भावः सम्यक्त्वं, दर्शनमोहनीयक्षयक्षयोपशमोपशमाविर्भूता जिनोक्ततत्त्वश्रद्धानरूप आत्मपरिणामस्तच्चोपाधिभेदादनेकप्रकारमपि श्रद्धानसामान्यादेकमेव, एकप्रकारमेव एकजीवस्य चैकदैकस्यैव भावादिति । तथा नाणं तुत्ति तुशब्दस्याप्यर्थत्वात् ज्ञानमप्येकविधमेव, तत्र ज्ञायन्ते, परिच्छिद्यन्ते अर्था अनेनेति ज्ञानमावरणक्षयक्षयोपशमादिसमुत्पन्नो मतिश्रुतादिविकल्पात्मको जीवस्यावबोधपरिणामः, तच्चानेकमप्यवबोधसामान्यादेकमुपयोगापेक्षया वा तथाहि—लब्धितो बहूनां बोधविशेषाणामेकदा संभवेऽप्युपयोगत एक एव सम्भवत्येकोपयोगत्वाज्जीवानामिति । नन्ववबोधसामान्यात्सम्यक्त्वज्ञानयोः कः प्रतिविशेषः । उच्यते?, रुचिः—सम्यक्त्वं रुचिकारणं तु ज्ञानं यथोक्तं "नाणमवायधिईओ दंसणमिट्ठं जहोग्गहेहाओ। तह तत्तरुई सम्मं रोइज्जई जेण तं नाणं" एतत्किमित्याह—उपसंपन्नः—प्रतिपन्नो युक्तः श्रमणगुणैः रक्षामि, पालयामि महाव्रतानि भणितस्वरूपाणि[1] पञ्चेति पञ्चसंख्यापरिच्छिन्नानीति । तथा

दो चेव रागदोसे दुन्नि य झाणाइ अट्टरोद्दाइं । परिवज्जंतो गुत्तो रक्खामि महव्वए पञ्च ॥ ३ ॥

द्वावेव द्विसंख्यावेव कावित्याह—रागश्च द्वेषश्च रागद्वेषौ तत्र अनभिव्यक्तमायालोभलक्षणभेदस्वभावमभिष्वङ्गमात्रं रागः, अनभिव्यक्तक्रोधमानलक्षणभेदस्वभावमप्रीतिमात्रं तु द्वेषः तौ परिवर्ज्जयन्नितियोगः । तथा द्वे च द्विसंख्ये च ध्यायते—चिन्त्यते—वस्त्वाभ्यामिति ध्याने, ध्याति वा ध्याने, अन्तर्मुहूर्त्तमात्रकालमेकाग्रचित्ताध्यवसाने यदाह—"अन्तोमुहुत्तमित्तं चित्तावत्थाणमेगवत्थुं

[1] निरनिस्वरूपाणि प्र० ।

मि। छउमत्थाणं ज्झाण जोगनिरोहो जिणाण तु'' ते एव नामग्राहमाह-आर्त्तं च रौद्र चार्त्तरौद्रे तत्र ऋत दु:ख तस्य निमित्त,तत्र वा भव, ऋते वा पीडिते प्राणिनि भवमार्त्त तच्चामनोज्ञाना शब्दरूपरसगन्धस्पर्शलक्षणाना विषयाणा तदाश्रयभूतवायसादिवस्तूना वा समुपनताना विप्रयोगप्रणिधान, भाविना चाऽसप्रयोगचिन्तनम् ॥१॥एव शूलशिरोरोगादिवेदनाया अपि विप्रयोगप्रार्थनम् ॥२॥ इष्टशब्दादिविषयाणां सातवेदनायाश्चावियोगसप्रयोगप्रार्थनम् ॥३॥ देवेन्द्रचक्रवर्त्यादिसमन्ध्यृद्धिप्रार्थन च ॥४॥ शोकाक्रन्दनस्वदेहताडनविलपनादिलक्षणलक्ष्य तिर्यग्गतिगमनकारण विनेयम्। तथा रोदयतीति रुद्र आत्मैव तस्य कर्म्म रौद्र, तदपि सत्त्वेषु वधवेधबन्धनदहनाङ्कनमारणादि प्रणिधानम् ॥ १ ॥ पैशून्यासत्यामद्भूतभूतघातादिवचनचिन्तनम् ॥ २ ॥ तीव्रकोपलोभाकुल भूतोपघातपरायण परलोकापायनिरपेक्ष परद्रव्यहरणप्रणिधानम् ॥ ३ ॥ सर्वाभिशङ्कनपर परोपघातपरायण शब्दादिविषयसाधकद्रव्यसरक्षणप्रणिधानम् ॥४॥ उत्सन्नवधादिगम्य नरकगतिगमनकारण समवसेयम्। एते च किमित्याह-परिवर्जयन् गुप्त' सन् रक्षामि महाव्रतानि पञ्चेति। तथा—

दुविह चरित्तधम्मं दुन्नि य ज्झाणाइ धम्मसुक्काइ। उवसपन्नो जुत्तो रक्खामि महव्वए पञ्च ॥ ४ ॥

द्विविध देशसर्वचारित्रभेदाद्द्विप्रकार चर्यते मुमुक्षुभिरासेव्यते तदिति, चर्यते वा गम्यतेऽनेन निर्वृताविति चरित्रं, अथवा चयस्य कर्मणा रिक्तीकरणाच्चरित्र निरुक्तन्यायादिति चारित्रमोहनीयक्षयाद्याविर्भूत आत्मनो विरतिरूप'परिणामस्तल्लक्षणो धर्मः श्रेयश्चारित्रधर्मस्त, द्वे च ध्याने प्रणिधाने धर्म्यं शुक्लं च धर्म्यशुक्ले तत्र श्रुतचरणधर्मादनपेतं धर्म्यं तच्च सर्वज्ञाज्ञानुचिन्तनम् ॥ १ ॥ राग द्वेषकषायेन्द्रियवशवर्त्तिनन्त्वपायविचिन्तनम् ॥ २ ॥ ज्ञानावरणादिशुभाशुभकर्म्मविपाकसस्मरणम् ॥३॥ क्षितिवलयद्वीपसमुद्रप्रभृतिव-

¹ विप्रयोगासंप्रयोग० प्र०। २ दिसमृद्धि प्र०। ३ सभ्या० प्र०।

स्तुसंस्थानादिधर्म्मालोचनात्मकम् ॥४॥ जिनप्रणीतभावश्रद्धानादिचिह्नगम्यं देवगत्यादिफलसाधकं ज्ञातव्यम् । तथा–शोधयत्यष्टप्रकारं कर्म्ममलं शुचं वा शोकं क्लमयत्यपनयतीति निरुक्तविधिना शुक्लम् एतदपि पूर्वगतश्रुतानुसारिनानानयमतैकद्रव्यगतोत्पत्तिस्थितिभङ्गादिपर्यायानुसरणादिस्वरूपम् । अवधासंमोहादिलिङ्गगम्यं मोक्षादिफलप्रसाधकं विज्ञेयम् । शेषं प्राग्वत् ज्ञेयमिति ॥ तथा–

किन्हा नीला काऊ तिन्नि य लेसाउ अप्पसत्थाउ । परिवज्जन्तो गुत्तो रक्खामि महव्वए पञ्च ॥ ९ ॥

किण्हत्ति विभक्तिव्यत्यात्कृष्णां एवं नीलत्ति नीलां, काउत्ति कापोतीं; चेत्येतास्तिस्रस्तिसंख्याः चशब्दो योजित एव, लिश्यन्ते श्लिष्यन्ते प्राणिनः कर्म्मणा यकाभिस्ता लेश्याः कृष्णादिद्रव्योपाधिका जीवपरिणामविशेषाः, आह च–"श्लेष, इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्यः । तथा–" कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मनः । स्फटिकस्येव तत्रायं लेश्याशब्दः प्रयुज्यत" इति, ताः किंविशिष्टा इत्याह–अप्रशस्ता अप्रशस्तस्वरूपत्वात् क्लिष्टकर्म्मबन्धहेतुत्वाच्चारित्रादिगुणलाभविघातनिमित्तत्वाच्चासुन्दराः किमित्याह–परिवर्जयन्नित्यादि पूर्ववदिति । तथा—

तेऊ पम्हा सुक्का तिन्नि य लेसाउ सुप्पसत्थाओ । उवसंपन्नो जुत्तो रक्खामि महव्वए पञ्च ॥ ३ ॥

तेउत्ति तैजसीं, पम्हत्ति पद्मां; सुक्कत्ति शुक्लां चेत्येतास्तिस्रस्तिसंख्याश्चशब्दः प्राग्योजित एव लेश्याः परिणामविशेषाः, सुप्रशस्ताः शुभस्वरूपत्वात् शुभकर्मबन्धहेतुत्वाच्चारित्रादिगुणलाभकारणत्वात् शुभगतिनिबन्धनत्वाच्च सुन्दराः किमित्याह–उपसंपन्न इत्यादिपूर्ववदिति । तत्र कृष्णा वर्णतः–स्निग्धजीमूतगवलव्यालभ्रमराञ्जनादिसमानवर्णाः, रसतो रोहिणीपिचुमन्दकटुकतुम्बकादिसमधिकतमर-

सै', गन्धत'–कुथितगोकडेवरादिसमधिकतमगन्धैः, स्पर्शत'–क्रकचादिसमधिकतमस्पर्शैः, सकलकर्म्मप्रकृतिनिष्पन्दभूतैः, कृष्णद्रव्यैर्जनितत्वात्कृष्णामिधाना । नीला तु वर्णतो नीलाशोकगुलिकावैडूर्येन्द्रनीलचापपिच्छादिसमवर्णैः, रसतो मरिचापिप्पलीनागरादिसमधिकतररसै', गन्धतो मृततुरगशरीरादिसमधिकतरगन्धै', स्पर्शतो गोजिह्वादिसमधिकतरकर्कशस्पर्शैः, सकलप्रकृतिनिष्पन्दभूतैर्नीलद्रव्यैर्जनितत्वान्नीलामिधाना । कापोती तु वर्णतोऽतसीकुसुमपारापतशिरोधराफलिनीकन्दलादिधूम्रद्रव्यतुल्यवर्णै', रसतस्तरुणाम्रबालकपित्थादिसमधिकरसैः, गन्धत'–कुथितसरीसृपादिसमधिकगन्धै', स्पर्शतः–कठोरपलाशतरुपत्रादिसमधिकस्पर्शैः, सकलप्रकृतिनिष्पन्दभूतैः कपोताभद्रव्यैर्निष्पन्नत्वात्कापोतीसञ्ज्ञा । तैजसी तु वर्णतो वह्निज्वालशुकमुखकिंशुकतरुणार्कहिंगुलकादिलोहितद्रव्यसमानवर्णैः, रसतः परिणताम्रसुपक्वकपित्थादिसमधिकरसै', गन्धतो विचकिलपाटलादिसमधिकगन्धै', स्पर्शत'–शाल्मलीफलतूलादिसमधिकस्पर्शे', तेजोवर्णद्रव्यैर्निष्पन्नत्वात्तैजसीसञ्ज्ञा । पद्मा तु वर्णतो हरिद्राहरितालादिपीतद्रव्यसमवर्णैः, रसतो वरवारुणीमध्वादिसमधीररसैः, गन्धत'–शतपत्रिकापुटपाकगन्धादिसमधिकतरगन्धैः, स्पर्शतो नवनीतरुतादिसमधिकतरसुकुमारस्पर्शैः, पद्मगर्भाभद्रव्यैर्निष्पन्नत्वात्पद्माभिधाना । शुक्ला तु वर्णतः–शङ्खकुन्देन्दुहारक्षीररजतादिसदृशवर्णैः, रसतो मृद्वीकाखण्डक्षीरखर्जूरशर्करादिसमधिकतमशुभरसैः, गन्धतः–कर्पूरमालतीमाल्यादिसमधिकतमसुरभिगन्धै', स्पर्शतः–शिरीषपुष्पादिसमधिकतमसुकुमारस्पर्शैः, शुक्लद्रव्यैर्जनितत्वाच्छुक्लाभिधाना । आसां च स्वरूपतारतम्य जम्बूफलखादकपुरुषदृष्टान्तेन ग्रामघातकचौरपुरुषदृष्टान्तेन च " जह जम्बुपायवेगो सुपक्कफलभरियनमियसालग्गो । दिट्ठो छहि पुरिसहि ते बिन्ती जम्बु भक्खेमो । १ । किह पुण ते बिन्तेगो आरुहमाणाण जीय सन्देहो । तो छिन्दिऊण मूले पाडेउन्ताहे(इ)भक्खेमो । २ । बिइयाह एद्दहेण छिन्नेण (कि) दुमेण अम्हन्ति । साहा महल्ल छिन्दह

छिन्दह तइओ वेइ पसाहाओ । ३। गोच्छे चउत्थओ उण पञ्चमओ वेइ गिह्नइ फलाइं । छट्ठो वेई पडिया एए चिय खायहा घेत्तुं । ४ । दिट्ठन्तस्सोवणओ जो वेइ तरुं तु छिन्दिमो मूला । सो वट्टइ किण्हाए, सालमहल्लाउ नीलाए । ५ । हवइ पसाहा काऊ गुच्छा तेऊ फला य पम्हाए । पडिया य सुक्कलेसा अहवा अन्नं इमाहरणं । ६ । चोरा गामवहत्थं विणि-ग्गया एगो बेइ घाएह । जं पेच्छह तं सव्वं दुपयं च चउप्पयं वावि । ७। बिईओ माणुसपुरिसे य तइओ य साउहे चउत्थो उ । पञ्चमओ जुज्जंते छट्ठो पुण तत्थिमं भणइ । ८ । एक्कं ता हरह धणं बीयं मारेह मा कुणह एवं । केवल हरह धणन्ती उवसंहारो इमो तेसिं । ९ सव्वे मारेहत्ती वट्टइ सो किण्हलेसपरिणामे । एवं कमेणं सेसा जा चरिमो सुक्कलेसाए । १० । इति सूत्रद्वयभावार्थ इति ॥ तथा–

**मणसा मणसच्चविऊ वायासच्चेण करणसच्चेण । तिविहेण वि सच्चविऊ रक्खामि महव्वए पञ्च ॥ ७ ॥**

अस्य प्राकृतचूर्ण्यानुसारिणी व्याख्येयं–मनसा शुभस्वभावरूपेण चेतसा करणभूतेन रक्षामि महाव्रतानि पञ्चेति सर्वत्र योगः; किंविशिष्टः सन्नित्याह–मणसच्चविउत्ति; मनसः सत्यं मनःसत्यं मनःसंयम इत्यर्थः । स चाकुशलमनोनिरोधकुशलमनःप्रवर्त्तनलक्षणस्तं वेद्मि सम्यगासेवतो जानामीति मनःसत्यविद्वान्, तथा वाक्सत्येन कुशलाकुशलवचनोदीरणनिरोधलक्षणेन वाक्संयमेन करणभूतेन तथा करणसत्येन क्रियातथ्येन कायसंयमेनेत्यर्थः, स च सति कार्ये उपयोगतो गमनागमनादिविधानं तदभावे तु संलीनकरचरणाद्यवयवस्यास्थानं यदिति । अनेन च भङ्गत्रयाभिधानेनान्यदपि द्विकसंयोगभङ्गत्रयं सूचितं तद्यथा–मनोवाक्सत्येन मनः कायसत्येन वाकायसत्येन चेति तथा–तिविहेण वि सच्चविउत्ति, त्रिविधेनापि मनोवाक्कायलक्षणेन करणेन सत्यविद्वान् संयमज्ञः शुद्धसंयमपालक इत्यर्थः, अनेन च त्रिकसंयोगभङ्गः प्रदर्शित इत्येवं सप्तविकल्पेन संयमेन, रक्षामि परिपालयामि, महाव्रतानि पञ्चेति । तथा ।

चत्तारि य दुहसेज्जा चउरो सन्ना तहा कसाया य । परिवज्जन्तो गुत्तो रक्खामि महव्वए पञ्च ॥ ८ ॥

चतस्रश्चतु संख्याश्चशब्दोऽभ्युच्चये, शेरते आस्विति-शय्या., दु:खदा: शय्या दु:खशय्या:, ताश्च द्रव्यतोऽतथाविधखट्वारूपा', भावतस्तु दु:स्थचित्ततया दु:श्रमणताम्वभावा., प्रवचनाश्रद्धान १, परलाभप्रार्थन २, कामाशसन ३, स्नानादि प्रार्थनविशेषिता मन्तव्या:। यदुक्त स्थानाङ्गसूत्रे-" चत्तारि दुहसेज्जाओ पन्नत्ताओ तत्थ खलु इमा पढमा दुहसेज्जा 'सेण मुण्डे भवित्ता अगाराओ अणगारिय पव्वइए; निग्गथे पावयणे सकिए कखिए वितिगिन्छिाए भेयसमावन्ने कलुससमावन्ने निग्गथ पावयण नो सद्दहइ, नो पत्तियइ, नो रोएइ निग्गथ पावयण असद्दहमाणे अपत्तियमाणे अरोएमाणे मण उच्चावय नियच्छइ विणिग्घायमावज्जइ पढमा दुहसेज्जा ' से इति स कश्चिद्गुरुकर्म्मा, प्रवचने शासने, दीर्घत्व च प्राकृतत्वादिति, शङ्कित एकभावविपयसशययुक्त:, काङ्क्षितो मतान्तरमपि साध्विति बुद्धि(मान्), विचिकित्सित' फल प्रति शङ्कावान्, भेदसमापन्नो बुद्धेर्द्वैधीभावापन्न एवमिद सर्वं जिनशासनोक्तमन्यथावेति, कलुपसमापन्नो नैतदेवमिति विपर्यस्त इति, न श्रद्धत्ते सामान्येनैवमिदमिति नो प्रत्येति प्रतिपद्यते प्रीतिद्वारेण, नो रोचयति अभिलापातिरेकेणासेवनाभिमुखतयेति, मनश्चित्तमुच्चावचसमञ्जस निर्गच्छति-याति-करोतीत्यर्थ., ततो विनिर्घात धर्म्मभ्रश ससार वा आपद्यते एवमसौ श्रामण्यशय्याया दु:खमास्ते इत्येका । "'अहावरा दोच्चा दुहसेज्जा ' से ण मुण्डे भवित्ता अगाराओ जाव पव्वइए सएणं लाभेण नो तुस्सइ, परस्स लाभं आसाएइ, पीहेइ, पत्थेइ, अभिलसइ, परस्स लाभ आसाएमाणे जाव अभिलसमाणे मणे उच्चावय नियच्छइ विणिग्घायमावज्जइ दोच्चा दुहसेज्जा " स्वकेन स्वकीयेन लभ्यते लम्भन वेति लाभोऽन्नादे रत्नादेर्वा आशा करोतीत्याशयति

स नूनं मे दास्यतीत्येवमिति, आस्वादयति वा लभते चेद् भुंक्त एव स्पृहयति, वाञ्छयति, प्रार्थयते, याचते, अभिलपति; लब्धेऽप्यधिकतरं वाञ्छतीत्यर्थः। शेपमुक्तार्थमेवमप्यसौ दुःखमास्ते इति द्वितीया। "अहावरा तच्चा दुहसेज्जा 'से णं मुण्डे भवित्ता जाव पव्वइए दिव्वमाणुस्सए कामभोगे आसाएइ, जाव अभिलसइ दिव्वमाणुस्सए कामभोगे आसाएमाणे जाव अभिलसमाणे मणं उच्चावयं नियच्छइ विणिग्घायमावज्जइ तच्चा दुहसेज्जा" कण्ठ्यैवेयं। अहावरा चउत्था दुहसेज्जा ' से णं मुण्डे जाव पव्वइए तस्स णं एवं भवइ जया णं अहं अगारवासं आवसामि तया णं अहं संवाहणपरिमद्दणगायब्भङ्गगाउच्छोलणाइं से लभामि, जप्पभिइं च णं अहं मुण्डे जाव पव्वइए तप्पभिइं च णं अहं संवाहण जाव गाउच्छोलणाइं नो लभामि, से णं संवाहणं जाव गाउच्छोलणाइं आसाएइं जाव अभिलसइ, से णं संवाहण जाव गाउच्छोलणाइं आसाएमाणे जाव मणं उच्चावयं नियच्छइ विणिग्घायमावज्जइ चउत्था दुहसेज्जा" अगारवासो गृहवासः तमावसामि तत्र वर्त्ते संवाधनं शरीरस्यास्थिसुखत्वादिना नैपुण्येन मर्दनविशेषः, परिमर्द्दनं तु पृष्टादेर्म्मलनमात्रं परिशब्दस्य धात्वर्थमात्रवृत्तित्वात्, गात्राभ्यङ्गस्तैलादिनाङ्गम्रक्षणं गात्रक्षालनमङ्गधावनमेतानि लभे न कश्चिन्निपेधतीति शेषं कण्ठ्यमिति चतुर्थी। तथा चतस्रश्चतुःसङ्ख्याकाः का इत्याह—संज्ञानानि संज्ञा असातवेदनियमोहनियकर्मोदयजन्याश्चेतना, विशेपास्ताश्चेमाः आहारसंज्ञा १, भयसंज्ञा २, मैथुनसंज्ञा ३; परिग्रहसंज्ञा च ४। तत्राहारसंज्ञा आहाराभिलापः, सा पुनश्चतुर्भिः स्थानैरुत्पद्यते, तद्यथा—"ओमकोट्ठयाए १, छुहावेयणिज्जस्स कम्मस्स उदएणं २, मईए ३, तदट्ठोवओगेणं ४।" अवमकोष्ठतया, रिक्तोदरतया, मत्या आहारकथाश्रवणादिजनितबुद्ध्या, तदर्थोपयोगेन सततमाहारचिन्तया। भयसंज्ञा भयमोहनीयसंपाद्यो जीवपरिणामः, इयमपि चतुर्भिस्थानैः समुत्पद्यते, तद्यथा—"हीणसत्तयाए १, भयमोहणिज्जोदएणं २, मईए ३; तदट्ठोवओगेणं ॥४॥" हीनसत्त्वतया सत्त्वाभावेन, मतिर्भयवार्त्ताश्रव-

णमीपणदर्शनादिजनिता बुद्धिस्तया, तदर्थोपयोगेन इहलोकादिभयलक्षणार्थपर्यालोचनेनेति। मैथुनसंज्ञा वेदोदयजनितो मैथुनाभिलाषः, इयमपि चतुर्भिः स्थानैरुत्पद्यते, तद्यथा–"चियमससोणियाए १, वेयमोहणिज्जोदएण २, मईए ३, तदट्ठोवओगेण ४। चिते उपचिते मांसशोणिते यस्य स तथा तद्भावस्तत्ता तया चियमांसशोणिततया, मत्या सुरतकथाश्रवणादिजनितबुद्ध्या, तदर्थोपयोगेन मैथुनलक्षणार्थानुचिन्तनेनेति। परिग्रहसंज्ञा चारित्रमोहोदयजनित. परिग्रहाभिलाषः, इयमपि चतुर्भिः स्थानैरुत्पद्यते तद्यथा–"अविमुत्तयाए १, चारित्तमोहणिज्जोदएण २, मईए ३, तदट्ठोवओगेण ४" अविमुक्ततया सपरिग्रहतया मत्या सचेतनादिपरिग्रहदर्शनादिजनितबुद्ध्या तदर्थोपयोगेन परिग्रहानुचिन्तनेनेति। तथा कषायाश्चेति तेन चतुर्विधप्रकारेण कषायाश्च परिवर्ज्जयन्निति। तत्र कृषन्ति, विलिखन्ति कर्म्मक्षेत्र सुखदुःखफलयोग्य कलुषयन्ति वा जीवमिति निरुक्तविधिना कषाया', उक्त च–

" सुहदुक्खबहुसईयं कम्मक्खेत्त कसति ते जम्हा। कलुसंति ज च जीव तेण कसायत्ति वुचति " अथवा–कषति, हिनस्ति देहिन इति कषः कर्म्म भवो वा तस्याया लाभहेतुत्वात्कष वा आययन्ति गमयन्ति देहिन इति–कषायाः। उक्त च–" कम्म कस भवो वा कसमाओसिं जओ कसाया उ। कसमाययन्ति व जओ गमयन्ति कस कसायत्ति " ते चेमे क्रोधो मानो माया लोभश्च, तत्र क्रोधन क्रुध्यति वा येन स क्रोधः, क्रोधमोहनीयोदयसम्पाद्यो जीवस्य परिणतिविशेष' क्रोधमोहनीयकर्मेव वेति एवमन्यत्रापि। नवर जात्यादिगुणवानहमेवेत्येव मननमवगमन मन्यते वाऽनेनेति, मानः। तथा मान हिसन वञ्चनमित्यर्थः, मीयते वा अनयेति–माया तथा लोभनमभिकाक्षण लुभ्यते वाऽनेनेति–लोभः। एते चैहिकामुष्मिकमहानर्थशतहेतवो यदाह–" क्रोधात्प्रीतिविनाश मानाद्विनयोपघातमाप्नोति। शाठ्यात्प्रत्ययहानिं सर्वगुणविनाशन लोभात् ॥ १ ॥ क्रोधः परितापकरः सर्वस्योद्वेगकारकः क्रोधः। वैरानुषङ्ग-

जनकः क्रोधः, क्रोधः सुगति हन्ता । २ श्रुतशीलविनयसन्दूषणस्य धर्मार्थकामविघ्नस्य । मानस्य कोऽवकाशं मुहूर्त्तमपि पण्डितो दद्यात् । ३ । मायाशीलः पुरुषो यद्यपि न करोति कश्चिदपराधम् । सर्प इवाविश्वास्यो भवति, तथाप्यात्मदोषहतः । ४ । सर्वविनाशाश्रयिणः सर्व्वव्यसनैकराजमार्ग्गस्य । लोभस्य को मुखं गतः क्षणमपि दुःखान्तरमुपेयादित्यादि " परिवज्जन्तो इत्यादिपूर्ववत् तथा—

चत्तारि य सुहसेज्जा चउव्विहं संवरं समाहिं च । उवसंपन्नो जुत्तो रक्खामि महव्वए पञ्च ॥ ९ ॥

चतस्रश्चतुःसङ्ख्याः, चः, समुच्चये का इत्याह—सुखदाः शय्याः सुखशय्याः, एता दुःखशय्याविपरीताः प्रायः प्रागिवावगन्तव्याः । यदाह—" चत्तारि य दुहसेज्जाउ । पन्नत्ताउ तत्थ खलु इमा पढमा सुहसेज्जा, से णं मुण्डे भवित्ता अगाराओ अणगारियं पव्वइए निग्गंथे पावयणे निस्संकिए निक्कंखिए निव्वितिगिच्छे नो भेयसमावन्ने नो कलुससमावन्ने निग्गंथं पावयणं सद्दहइ पत्तियइ रोएइ निग्गंथं पावयणं सद्दहमाणे पत्तियमाणे रोएमाणे नो मणं उच्चावयं नियच्छइ नो विणिग्घायमावज्जइ पढमा सुहसेज्जा ॥१॥ अहावरा दोच्चा सुहसेज्जा, से णं मुण्डे भवित्ता जाव पव्वइए सएणं लाभेणं तुस्सइ परस्स लंभं नो आसाएइ नो पीहेइ नो पत्थेइ नो अभिलसइ परस्स लाभं अणासाएमाणे जाव अणभिलसमाणे नो मणं उच्चावयं नियच्छइ नो विणिग्घायमावज्जइ दोच्चा सुहसेज्जा ॥ २ ॥ अहावरा तच्चा सुहसेज्जा, से णं मुण्डे भवित्ता जाव पव्वईए दिव्वमाणुस्सए कामभोगे नो आसाएइ जाव नो अभिलसइ दिव्वमाणुस्सए कामभोए अणासाएमाणे जा अणभिलसमाणे नो मणं उच्चावयं नियच्छइ नो विणिग्घायमावज्जइ तच्चा सुहसेज्जा ॥ ३ ॥ अहावरा चउत्था सुहसेज्जा से णं मुण्डे जाव पव्वइए तस्स णं एवं भवइ जइ ताव अरहन्ता भगवन्ता हट्ठा अरोगा बलिया कल्लसरीरा अन्नयराइं उरालाइं कल्लाणाइं विपुलाइं पयत्ताइं पग्गहियाइं महानुभागाइं कम्मक्खयकारणाइं तवोकम्माइं पडिवज्जन्ति, किमङ्गपुण

अह अब्भोवगमिउवक्कमिय वेयण नो सम्म सहामि खमामि तितिक्खेमि अहियासेमि, मम च ण अब्भोवगमिउवक्कमिय वेयण सम्म असहमाणस्स अखममाणस्स अणहियासेमाणस्स किं मन्ने कज्जइ ?, एगतसो मे पावे कम्मे कज्जइ, मम ण च ण अब्भोवगमिउ जाव सम्म सहमाणस्स जाव अहियासेमाणस्स किं मन्ने कज्जइ ?, एगन्तसो मे निज्जरा कज्जइ, चउत्था सुहसेज्जा ॥ ४ ॥
हट्ठत्ति शोकाभावेन हृष्टा इव हृष्टाः, अरोगा ज्वरादिवर्ज्जिता', वलिकाः प्राणवन्तः, कल्पशरीराः पटुशरीराः, अन्यतराणि अनशनादीना मध्ये एकतराणि उदाराणि आशसादोपरहिततयोदारचित्तयुक्तानि, कल्याणानि मङ्गलस्वरूपत्वात्, विपुलानि बहुदिनत्वात्, प्रयतानि प्रकृष्टसयमयुक्तत्वात् प्रगृहीतानि आदरप्रतिपन्नत्वात्, महानुभागानि अचिन्त्यशक्तियुक्तत्वात्, ऋद्धिविशेषकारणत्वात् (द्वा) कर्मक्षयकारणानि मोक्षसाधनत्वात्, तप'कर्माणि तपःक्रिया., प्रतिपद्यन्ते आश्रयन्ति, किमङ्ग पुणत्ति किं प्रश्ने अङ्गेत्यामन्त्रणेऽलङ्कारे, सा पुनरिति पूर्वोक्तार्थवैलक्षण्यदर्शने, शिरोलोचब्रह्मचर्यादीनामभ्युपगमे भवाभ्युपगमिकी उपक्रम्यतेऽनेनायुरित्युपक्रमो ज्वरातीसारादिस्तत्र भवा या सौपक्रमिकी ता वेदना, सहामि तदुत्पचावविमुखतया, क्षमे विस्रोपतया, तितिक्षामि अदीनतया, अध्यासयामि सौष्ठवातिरेकेण तत्रैव वेदनायामवस्थान करोमीत्यर्थः । मन्ये निपातो वितर्कार्थः, क्रियते–भवतीत्यर्थः । तथा–चतुर्विध चतुःप्रकार, कमित्याह–सचर सयम, स चाय "मणसजमे, वइसजमे, कायसजमे, उवगरणसजमे" तत्र मनोवाकायानामकुशलत्वेन निरोधाः कुशलत्वेनोदीरणानि सयमाः ३ । उपकरणसयमो महामूल्यवस्त्रहिरण्यादिपरिहारः, वस्त्रपुस्तकतृणचर्म्मपञ्चकपरिहारो वा, तत्र–"गण्डी कच्छवि मुट्ठी सपुडफलए तहा छिवाडीए । एय पुत्थयपणय वक्खाणमिणं भवे तस्स ॥१॥ वाहल्लपुहुत्तेहिं गण्डीपुत्थो उ तुल्लगो दीहो । कच्छवि अन्ते तणुओ मज्झेपिहुलो मुणेयव्वो ॥ २ ॥ चउरगुलदीहो वा वट्टागिई मुट्ठिपोत्थगो अहवा । चउरगुलदीहो निय चउ

रंसो होइ विन्नेओ ॥ ३ ॥ संपुडगो दुगमाई फलगा वोच्छञ्छिवाडिमेत्ताहे । तणुपत्तूसियरूवो होइ छिवाडी बुहा बेन्ति ॥ ४ ॥ दीहो वा हस्सो वा जो पिहुलो होइ अप्पबाहल्लो । तं मुणियसमयसारा छिवाडिपोत्थं भणन्तीह ॥५॥ अप्पडिलेहियदूसे तूली उवहाणगं च नायव्वं । गण्डुवहाणालिङ्गिणि मसूरए चेव पोत्तमए ॥ ६ ॥ पल्हविकोयविपावारनवयए तह य दाढिगाली य । दुप्पडिलेहियदूसे एयं बीयं भवे पणगं ॥७॥ पल्हवि हत्थुत्थरणं कोयवओ रूयपूरिओ । पडओ दढगाली धोयपोत्ती सेस पसिद्धा भवे भेया ॥ ८ ॥ " अत्र वृद्धसम्प्रदायः–हत्थुत्थरणं खरडं १, कोयवओ चूरडिगा (वूरट्टिगा) २, पावारो सलोमपडओ ३, नवओ जीणं ४, दढगाली धोयपोत्ती सदसवत्थन्ति भणियं होइ ५; "तणपणगं पुण भणियं जिणेहि कम्मट्ठगंठिमहणेहिं । साली वीही कोद्दव रालगर न्नेतणाइं च ॥ ९ ॥ अयएलगाविमहिसीमिगाणमजिणं च पञ्चमं होइ । तलिगाखल्लगवद्धे कोसगकत्ती य बीयं तु ॥ १० ॥ अपवादतस्तु पुस्तकपञ्चकादीग्रहणेऽपि संयम एव यदाह–" दुप्पडिलेहियदूसं अद्धाणाई विचित्त गेह्णन्ति घिप्पइ पोत्थगपणगं कालियनिज्जुत्तिकोसट्ठेत्यादि " । तथा समाधिं चेति समाधानं समाधिः प्रशस्तभावाविरोधलक्षणः, स च दर्शनज्ञानतपश्चारित्रविषयभेदाच्चतुर्विधः, दर्शनादीनां समस्तानां व्यस्तानां वा अविरोध इतिकृत्वा तमुपसंपन्न इत्यादि पूर्ववदिति । तथा—

पञ्चेव य कामगुणे पञ्चेव अण्हवे महादोसे । परिवज्जन्तो गुत्तो रक्खामि महव्वए पञ्च ॥ १० ॥

पञ्चैव मनोज्ञशब्दरूपरसगन्धस्पर्शभेदात्पञ्चसंख्या एव, चशब्दोऽर्थान्तराभिधानसमुच्चयार्थः, के इत्याह काम्यन्ते रागातुरैः प्राणिभिरभिकांक्ष्यन्त इति कामा अभिलषणीयपदार्थास्त एवात्मसंयमनैकहेतुत्वाद् गुणाः सूत्रतन्तवः आत्मगुणोपघातकारणत्वाद्वा गु-

णाः कामगुणाः, अथवा-कामस्य मदनस्याभिलापमात्रस्य वा सपादका गुणाः धर्माः पुद्गलाना कामगुणा', ते चानर्थहेतवो यदुक्तं-

" कलरिभितमधुरगान्धर्वतूर्ययोषिद्विभूपणरवाद्यैः । श्रोत्रावबद्धहृदयो हरिण इव विनाशमुपयाति ॥ १ ॥
गतिविभ्रमेङ्गिताकारहास्यलीलाकटाक्षविक्षिप्त' । रूपावेशितचक्षुः शलभ इव विपद्यते विवशः ॥ २ ॥
स्नानाङ्गरागवर्त्तिकवर्णकधूपाधिवासपटवासैः । गन्धभ्रमितमनस्को मधुकर इव नाशमुपयाति ॥ ३ ॥
मिष्टान्नपानमासौदनादिमधुररसविपयगृद्धात्मा । गलयन्त्रपाशबद्धो मीन इव विनाशमुपयाति ॥ ४ ॥
शयनासनसम्बाधनसुरतस्नानानुलेपनासक्त' । स्पर्शव्याकुलितमतिर्गजेन्द्र इव वध्यते मूढः ॥ ५ ॥ "

इत्यतस्तान् कामगुणान् परिवर्जयन्निति योगः । तथा-पञ्चैव प्राणातिपातमृपावादादत्तादानमैथुनपरिग्रहभेदात्पञ्चसङ्ख्या एव, चः-समुच्चये, के इत्याह-आस्रौत्यादत्ते कर्म्म यैस्ते आस्रवा आस्रवा इत्यर्थस्तान्, किंविधानित्याह-महान्तश्च ते दोपाश्च महादोपा दारुणदु'खहेतुत्वात्प्रकृष्टदूषणानि तान् शेप पूर्ववदिति । तथा—

पञ्चिन्दियसवरण तहेव पञ्चविहमेव सज्झाय । उवसंपन्नो जुत्तो रक्खामि महव्वए पञ्च ॥ ११ ॥

तत्रेन्दनादिन्द्रो जीवः सर्वविपयोपलब्धिभोगलक्षणपरमैश्वर्ययोगात्, तस्य लिङ्गमिति इन्द्रिय श्रोतादि, तच्च द्विविध द्रव्येन्द्रियं भावेन्द्रिय च, तत्र " निर्वृत्त्युपकरणे द्रव्येन्द्रिय, " " लब्धयुपयोगौ भावेन्द्रिय, " तत्र निर्वृत्तिराकारः, सा च बाह्याभ्यन्तरा च, तत्र बाह्याऽनेकप्रकारा, अभ्यन्तरा पुनः क्रमेण श्रोत्रादीना कदम्बपुष्प १, धान्यमसूरा २, ऽतिमुक्तपुष्पचन्द्रिका ३, क्षुरप्र ४, नानाकार ५,

संस्थाना, उपकरणेन्द्रियं विपयग्रहणे सामर्थ्यं छेद्यच्छेदने खड्गस्येव धारा यस्मिन्नुपहते निर्वृत्तिसद्भावेऽपि विपयं न गृह्णातीति, लब्धीन्द्रियं तदावरणक्षयोपशमः, उपयोगेन्द्रियं यः स्वविपये व्यापार इति। ततश्च पञ्च च तानीन्द्रियाणि च पञ्चेन्द्रियाणि तेपां संवरणं इष्टानिष्टविपयेषु रागद्वेपाभ्यां प्रवर्त्तमानानां निग्रहणं पञ्चेन्द्रियसंवरणं तदुपसंपन्नः, तहेवत्ति—तथैव तेनैव प्रकारेण पञ्चविध-मेव वाचनाप्रच्छनापरिवर्त्तनानुप्रेक्षाधर्मकथाभेदात्पञ्चप्रकारमपि, तत्र—वक्ति शिष्यस्तं प्रति गुरोः प्रयोजकभावो वाचना पाठनमित्यर्थः, गृहीतवाचनेनापि संशयाद्युत्पत्तौ पुनः प्रष्टव्यमिति पूर्वाधीतस्य सूत्रादेः शङ्कितादौ प्रश्नः प्रच्छनेति, प्रच्छनाविशोधितस्य सूत्रस्य मा भूद्विस्मरणमिति परिवर्त्तना सूत्रस्य गुणनमित्यर्थः, सूत्रवदर्थेऽपि सम्भवति विसरणमतः सोऽपि परिभावनीय इत्यनुप्रेक्षणमनुप्रेक्षा चिन्तनिकेत्यर्थः, एवमभ्यस्तश्रुतेन धर्मकथा विधेयेति धर्म्मस्य श्रुतरूपस्य कथा व्याख्या धर्मकथेति । एवं पञ्चविधं किमित्याह—सज्झायन्ति शोभनमा मर्यादयाऽध्ययनं श्रुतस्याधिकमनुसरणं स्वाध्यायस्तमुपसंपन्न इत्यादि पूर्ववदिति । तथा—

**छज्जीवनिकायवहं छप्पि य भासाउ अप्पसत्थाउ । परिवज्जन्तो गुत्तो रक्खामि महव्वए पञ्च ॥ १२ ॥**

षड्जीवनिकायानां पृथ्वीकायाप्कायतेजःकायवायुकायवनस्पतिकायत्रसकायलक्षणषड्विधप्राणिगणानां वधो विनाशः षड्जीवनिकाय-वधस्तं, तथा षड्पि च अलीकादिभेदात् पट् सङ्ख्याः अपि च, का इत्याह—भाष्यन्ते प्रोच्यन्ते इति भापा वचनानीत्यर्थस्ताः किंवि-शिष्टा इत्याह—अप्रशस्ता गुरुकर्म्मबन्धहेतुत्वादसुन्दराः उक्तं च—

“नो कप्पइ निग्गंथयाण वा निग्गंथीण वा इमाइं छ अवयणाइं भासित्तए तंजहा—अलियवयणे, हीलियवयणे, खिंसियवयणे, फरु-सवयणे, गारत्थियवयणे, विओसवियाहिगरणउदीरणवयणेत्ति ” न कल्पते न युज्यते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा इमानि पट् अव-

यणाइति, नञ' कुत्सार्थत्वात्कुत्सितानि वचनानि भासित्तएत्ति भाषितु, अलीकवचन प्रचलायसे कि दिवेत्यादिप्रश्ने न प्रचलायामीत्यादि भाषण, हीलितवचन सासूय गणिन् वाचक ज्येष्ठार्येत्यादिजल्पन, खिंसितवचन जन्मकर्माद्युद्घाटन, परुषवचन दुष्टशैक्षेत्यादिप्रलपन, अगारन्ति अगार गेह तद्वृत्तय. अगारस्थिता गृहिणस्तेपा यत्तदगारस्थितवचन पुत्र मामक भागिनेयेत्यादि, तथा व्यवशमितस्योपशम नीतस्याधिकरणस्य कलहस्योदीरणवचन प्रवर्त्तनवाक्य व्यवशमिताधिकरणोदीरणवचन षष्ठमिति, अत्र गाथा–" खामियवोसमियाइ अहिगरणाइ तु जे उदीरिंति । ते पावा नायव्वा तेसिं चारोवणा इणमो त्ति " शेष प्राग्वदिति, ॥ तथा—

छव्विहमब्भितरय बज्झ पि य अव्विह तवोकम्म । उवसपन्नो जुत्तो रक्खामि महव्वए पच ॥ १३ ॥

षड्विध प्रायश्चित्तविनयवैयावृत्यस्वाध्यायध्यानोत्सर्गभेदात्पड्प्रकार अब्भिन्तरयन्ति लौकिकैरनभिलक्ष्यत्वात्तन्त्रान्तरीयैश्च परमार्थतोऽनासेव्यमानत्वान्मोक्षप्राप्त्यन्तरङ्गत्वाच्चाभ्यन्तर तदेवाभ्यन्तरक तप कर्मेतियोग., तत्रेह चित्त जीवो भण्यते, ततः प्रायो बाहुल्येन चित्त जीव विशोधयत्यतिचारजनितकर्ममलमलिन निर्मल करोतीति प्रायश्चित्त आलोचनादि दशविधमिति, विनीयतेऽष्टप्रकार कर्म्मानेनेति–विनयः, स च ज्ञानदर्शनचारित्रमनोवचनकायलोकोपचारविनयभेदात्सप्तधा, तत्र ज्ञानमाभिनिबोधकादि पञ्चधा तदेव विनयो ज्ञानस्य वा विनयो भक्त्यादिकरण ज्ञानविनयः । उक्त च—

" भत्ती तह बहुमाणे २ तद्दिट्ठत्थाण सम्म भावणया ३ । विहिगहण ४ ब्भासो वि य एसो विणओ जिणाभिहिणो " ॥ दर्शन सम्यक्त्व तदेव विनयो दर्शनस्य वा तदव्यतिरेकाद्दर्शनगुणाधिकाना शुश्रूषणाऽनाशातनारूपो विनयो दर्शनविनयः उक्त च—

“ सुस्सूसणा अणासायणा य विणओ उ दंसणे दुविहो । दंसणगुणाहिएसुं कज्जइ सुस्सूसणाविणओ । १ । सक्कारब्भुट्ठाणे २ सम्माणासणपरिग्गहो ४, तहय । आसणमणुप्पयाणं ५, किइकम्मं ६, अञ्जलिगहो य । ७ । २ । एतस्सणुगच्छणया । ८ । ठियस्स तह पज्जुवासणा भणिया । ९ । गच्छन्ताणुव्वयणं १० एसो सुस्सूसणाविणओ । ३ । “ इह च सत्कारः स्तवनवन्दनादिः, अभ्युत्थानं विनयार्हस्य दर्शनादेवासनत्यजनं, सन्मानो वस्त्रपात्रादिपूजनम्, आसनाभिग्रहः पुनस्तिष्ठत आदरेणासनानयनपूर्वकमुपविशतात्रेति भणनम्, आसनानुप्रदानं तु आसनस्य स्थानात् स्थानान्तरसंचारणं, कृतिकर्म्म द्वादशावर्त्तवन्दनकं शेषं प्रकटमिति । उचितक्रियाकरणरूपोऽयं दर्शने शुश्रुषाविनय इति । अनाशातनाविनयस्तु अनुचित क्रियाविनिवृत्तिरूपोऽयं पञ्चदशविधः आह च—

“तित्थयर १, धम्म २, आयरिय ३, वायगे ४, थेर ५, कुल ६, गणे ७, सङ्घे ८, । संभोगिय ९ किरियाए १० मइनाणाईण य तहेव य १५” सांभोगिका एकसामाचारीकाः, क्रिया आस्तिकता । अत्र भावना—तीर्थंकराणामनाशातनायां वर्त्तितव्यमित्येवं सर्वं द्रष्टव्यमिति । “ कायव्वा पुण भत्ती बहुमाणो तह य वन्नवाओ य अरहन्तमाइआणं केवलनाणावसाणाणं ” उक्तो दर्शनविनय : । सांप्रतं चारित्रविनय उच्यते तत्र—चारित्रमेव विनयः चारित्रस्य वा श्रद्धानादिरूपो विनयः, चारित्रविनयः । आह च—“ सामाइयाइचरणस्स सद्दहाणं १ तहेव काएणं । संफासणं २ परूवणमह पुरओ सव्वसत्ताणं ३ ति ” मनोवचनकायविनयास्तु मनःप्रभृतीनां विनयार्हेषु कुशलप्रवृत्त्यदिरूपाः यदुक्तं—

“ मणवइकायविणओ आयरियाईण सव्वकालंपि । अकुसलाण निरोहो कुसलाण उदीरणं तह य” लोकानामुपचारो व्यवहारस्तेन स एव वा विनयो लोकोपचारविनयः, स चाभ्यासवर्त्तित्वादिभेदात् सप्तधा, तत्राभ्यासवर्त्तित्वं प्रत्यासत्तिवर्त्तित्वं, श्रुताद्यार्थिना

हि आचार्यादेः समीपे आसितव्यमित्यर्थः । १ । तथा परच्छन्दोऽनुवर्त्तित्व पराभिप्रायावनुर्त्तित्व । २ । तथा कार्यहेतोः, कार्य श्रुतप्रापणादिक हेतु कृत्वा श्रुत प्रापितोऽहमनेनेति हेतोरित्यर्थः विशेषेण तस्य विनये वर्त्तितव्य तदनुष्ठान कर्त्तव्यमिति । ३ । तथा कृतप्रतिकृतिता, कृते भक्तादिनोपचारे प्रसन्ना गुरव' प्रतिकृतिं प्रत्युपकार सूत्रादिदानत' करिष्यन्ति न नाम निर्ज्जरैवेति भक्तादि-दाने यतितव्यमिति । ४ । तथा–आर्त्तगवेपणता, आर्त्तस्यदु खार्त्तस्य गवेपणमौपधादेरित्यार्त्तगवेपण तदेवार्त्तगवेपणता पीडितस्योपकारकरणमित्यर्थ' । ५ । तथा–देशकालज्ञता अवसरज्ञता । ६ । तथा सर्वार्थेष्वप्रतिलोमता आनुकूल्यमिति ।७ । २ । उक्तो विनयः, साप्रत वैयावृत्यमुच्यते, तत्र–व्यावृत्तभावो वैयावृत्य धर्मसाधनार्थमन्नादिदानमित्यर्थः, । आह च—

“ वेयावच वावडभावो इह धम्मसाहणनिमित्त । अन्नाइयाण विहिणा सपायणमेस भावत्थो ” तच दशधा–“ आयरियउवज्झाए थेरतवस्सीगिलाणसेहाण । साहम्मियकुलगणसङ्घसङ्गय तमिह कायव्वन्ति ” तथा सुष्ठु आ मर्यादयाऽध्यायोऽध्ययन, स्वाध्याय', स च पञ्चधा, वाचना, प्रच्छना, परिवर्त्तना, अनुप्रेक्षा, धर्म्मकथा चेति । तथा–ध्यातिर्ध्यानमेकाग्रचित्तनिरोधस्तच्चतुर्द्धा प्राग्व्याख्यात, तत्र धर्म्मशुक्ले एव तपसी निर्जरार्थत्वान्नेतरे बन्धहेतुत्वादिति । तथा–उत्सर्गः परित्यागः, स च द्वेधा द्रव्यतो भावतश्च, तत्र द्रव्यतो गणशरीरोपध्याहारविषयः, भावतस्तु क्रोधादिविपय इति । उक्तमाभ्यन्तर तपः । वज्झपि य छव्विह तवोकम्ममिति, वाह्यमित्यासेव्यमानस्य लौकिकैरपि तपस्तया ज्ञायमानत्वात् प्रायो वहिः शरीरतापकत्वाद्वेति वाह्यमपिचेतिसमुच्चये, षड्विधमनशनाऽवमौदरिकावृत्तिसक्षेपरसपरित्यागकायक्लेशप्रतिसलीनताभेदात् पट्प्रकार, किं तदित्याह—

तपति दुनोति शरीरकर्माणीति तपस्तस्य कर्म्म क्रिया तपःकर्म्म तपोऽनुष्ठानमित्यर्थः, तत्रानशनभोजनमाहारत्याग इत्यर्थः,

तद्विधा, इत्वरं यावत् कथिकं च, तत्रेत्वरं चतुर्थादि पण्मासान्तमधिकृततीर्थमाश्रित्येति, यावत्कथिकं त्वाजन्मभावि त्रिधा पादपोपगमनेङ्गितमरणभक्तपरिज्ञाभेदात् तत्र पादपो वृक्षस्तस्येव च्छिन्नपतितस्योपगमनं, अत्यन्तनिश्चेष्टतयाऽवस्थानं यस्मिन् तत्पादपोपगमनं, तथेङ्गिते नियमिते देश इति गम्यते मरणं मरणप्रतिज्ञा यत्र तदिङ्गितमरणं; तथा–भक्तं भोजनं तस्यैव न चेष्टादेरपि प्रत्याख्यानं वर्जनं यत्र तद्भक्तप्रत्याख्यानं, भवन्ति चात्र गाथाः–" सीहाइसु अभिभूओ पायवगमणं करेइ थिरचित्तो । आउंमि पहुप्पंते वियाणिउंमि नवरि गीयत्थो "॥ इदमस्य मुनेर्व्याघातवदुच्यते, निर्व्याघातं तु यत्सूत्रार्थनिष्ठित उत्सर्गतो द्वादशसमाः कृतपरिकर्म्मा सन् काल एव करोतीति, तद्विधिश्चायं—

"चत्तारि विचित्ताइं विगईनिज्जूहियाइ चतारि । संवच्छरे य दोन्नि उ एगन्तरियं च आयामं ॥ १ ॥ नाइविगिट्ठो य तवो छम्मासं परिमियं च आयामं । अन्ने वि य छम्मासे होइ विगिट्ठं तवोकम्मं ॥ २ ॥ वासं कोडीसहियं आयामं काउ आणुपुव्वीए । संघयणादणुरूवं एत्तो अद्धाइ नियमेणं ॥ ३ ॥ "यतः–"देहंमि असंलिहिए सहसा धाऊहि खिज्जमाणाहि । जायइ अट्टं झाणं सरीरिणो चरिमकालंमि । ४ । " किंच–

"भावमवि संलिहेई जिणप्पणीएण झाणजोगेण । भूयत्थभावणाहि य परिवड्ढइ बोहिमूलाइं ॥ १ ॥ भावेइ भावियप्पा विसेसओ नवर तम्मि कालम्मि । पयईए निगुणत्तं संसारमहासमुद्दस्स ॥ २ ॥ जम्मजरामरणजलो अणाइमं वसणसावयाइन्नो । जीवाण दुक्खहेऊ क रोद्दो भवसमुद्दो ॥ ३ ॥ धन्नोहं जेण मए अणोरपारंमि नवरमेयंति । भवसयसहस्सदुलहं लद्धं सद्धम्मजाणन्ति ॥ ४ ॥ एयस्स पभावेणं पालिज्जंतस्स सइ पयत्तेणं । जम्मन्तरेवि जीवा पावन्ति न दुक्खदोगच्चं ॥ ५ ॥ चिन्तामणि अउव्वो एयमपुव्वो व कप्प-

रुस्सोत्ति । एय परमो मन्तो एय परमामय एत्थ ॥ ६ ॥ एत्थ वेयावडिय गुरूमाईणं । महाणुभावाण जेसि पभावेणेय पत्त तह पालिय चेव ॥ ७॥ तेसि नमो तेसि नमो भावेण पुणोवि तेसि चेव नमो । अणुवकयपरहियरया जे एय दिन्ति जीवाण ॥८॥ सलिहिऊणप्पाण एव पच्चप्पिणित्तु फलगाई । गुरुमाईए य सम्म खमाविउ भावसुद्धीए ॥ ९ ॥ उववूहिऊण सेसे पडिनद्धे तमि तह निसेसेण। धम्मे उज्जमियव्वं सजोगा हि वियोगता ॥ १० ॥ अह वन्दिऊण देवे जहाविहिं सेसए य गुरुमाई । पच्चाखाईत्तु तओ तयन्तिए सव्वमाहार ॥ ११ ॥ समभावम्मि ठियप्पा सम्म सिद्धन्तभणियमग्गेण । गिरिकन्दरमि गन्तु पायवगमण अह करेइ ॥ १२ ॥ सव्वत्थापडिनद्धो दण्डाययमाइ ठाणमिह ठाउ । जावज्जीव चिट्ठइ निचिट्ठो पायवसमाणो ॥ १४ ॥ पढमिल्लुयसङ्घयणे महाणुभावा करेन्ति एवमिण । पाय सुहभावच्चिय निच्चलपयकारण परम ॥ १५ ॥ " तथा—

"इगियदेसमि सय चउव्विहाहारचायनिप्पन्न । उव्वत्तणाइजुत्त नन्नेण उ इंगिणीमरण " तथा—"भत्तपरिण्णाणसण तिचउव्विहाहारचायनिप्फन्न । सपडिकम्म नियमा जहासमाही विणिद्दिट्ठन्ति " तथा—अवममूनमुदर जठरमवमोदर तस्य करण करोत्यर्थः- "णिज् वहुल नाम्न• कृगादिपु" ३-४-४२ इति णिजि चावमोदरिका सा च द्रव्यत उपकरणभक्तपानविपया प्रतीता, भावतस्तु क्रोधादित्याग इति । तथा वृत्तेर्भिक्षाचर्यारूपाया' सक्षेपो अभिग्रहविशेपात् सकोचन वृत्तिसक्षेपः, भिक्षाचर्याया चाभिग्रहा द्रव्यादिविपयतया चतुर्विधाः, तत्र द्रव्यतोऽलेपकृताद्येव द्रव्य ग्रहीष्ये, क्षेत्रतः परग्रामगृहपञ्चकादिलब्ध, कालतः पूर्वाह्णादौ, भावतो गानादिप्रवृत्तात् लब्धमिति । तथा—रसाः क्षीराद्यस्तत्परित्याग' रसपरित्यागः । तथा—कायक्लेशः शरीरक्लेशन स च शिरोलोचवीरासनादिरनेकधा । तथा—प्रतिसलीनता गुप्तता, सा चेन्द्रियकपाययोगविपया विविक्तशयनासनता चेति उक्त बाह्य तपः । उवसम्पन्नो इत्या

दि पूर्ववदिति, तथा—

**सत्त भयट्टाणाइं सत्तविहं चेव नाणविब्भंगं । परिवज्जन्तो गुत्तो रक्खामि महव्वए पञ्च ॥ १४ ॥**

सप्तेहलोकादिभयभेदात् सप्तसंख्यानि, भयं मोहनीयप्रकृतिसमुत्थ आत्मपरिणामस्तस्य स्थानान्याश्रया भयस्थानानि । तत्र—मनुष्यादिकस्य सजातीयादन्यस्मात् मनुष्यादेरेव शकाशाद्यद्भयं तदिहलोकभयम् इहाधिकृतभीतिमतो जातौ लोक इहलोकस्ततो भयमिति व्युत्पत्तेः ॥१॥ तथा-विजातीयात्तिर्यग्देवादेः सकाशान्मनुष्यादीनां यद्भयं तत्परलोकभयम् ॥२॥ तथा-आदीयत इत्यादानं धनं तदर्थं चौरादिभ्यो-यद्भयं तदादानभयम् ॥ ३ ॥ तथा-अकस्मादेवा वाह्यनिमित्तानपेक्षं गृहादिष्वेव स्थितस्य रात्र्यादौ भयमकस्माद्भयम् ॥ ४ ॥ तथा-वेदना पीडा तद्भयं वेदनाभयम् ॥ ५ ॥ तथा-मरणाद्भयम् प्रतीतमेव ॥ ६ ॥ तथा-अश्लोकभयमकीर्त्तिभयमिति ॥ ७ ॥ तथा-सप्तविधमेव सप्तप्रकारमेव नाणविब्भंगन्ति पूर्वापरनिपातनाद्विभङ्गज्ञानं, तत्र विरुद्धो वितथो वा, अयथावस्तु विकल्पो यस्मिंस्तद्विभङ्गं तच्च तज्-ज्ञानं च साकारत्वादिति विभङ्गज्ञानं मिथ्यात्वसहितावधिरित्यर्थः; । तच्चैवं सप्तविधं—

एकदिशि लोकाभिगमः, एकस्यां दिशि एकया दिशा पूर्वादिकयेत्यर्थः, लोकाभिगमो लोकाववोध इत्येकं विभङ्गज्ञानं, विभङ्गता चास्य शेषदिक्षु लोकस्यानभिगमेन तत्प्रतिषेधनादिति ॥ १ ॥ तथा—पञ्चसु दिक्षु लोकाभिगमो नैकस्यां कस्यां चिदिति, इहापि विभङ्गता एकदिशि लोकनिषेधादिति ॥ २ ॥ तथा-क्रियावरणो जीवः, क्रियामात्रस्यैव प्राणातिपातादेर्जीवैः क्रियमाणस्य दर्शना-त्तद्धेतुकर्म्मणश्चादर्शनात्क्रियैवावरणं कर्म यस्य स क्रियावरणः, कोऽसौ?, जीव इत्यवष्टम्भपरं यद्विभङ्गं तत्तृतीयम् । विभङ्गता चास्य कर्मणोऽदर्शनेनानभ्युपगमादेवमुत्तरत्रापि विभङ्गता समवसेयेति ॥ ३ ॥ मुदग्रे(ग्गे) जीवे, शरीरावगाहक्षेत्रवाह्याभ्यन्तरपुद्गलरचित-

शरीरो जीव इत्यवष्टम्भवत्, भवनपत्यादिदेवानां बाह्याभ्यन्तरपुद्गलपर्यादानतो वैक्रियकरणदर्शनादिति चतुर्थम् ॥ ४ ॥ अमुदमे (गे) जीवे, देवानां बाह्याभ्यन्तरपुद्गलादानविरहेण वैक्रियवतां दर्शनादबाह्याभ्यन्तरपुद्गलरचितावयवशरीरो जीव इत्य(ध्य)वसायवत्पञ्चमम् ॥ ५ ॥ रूवि जीवे, देवानां वैक्रियशरीरवतां दर्शनाद् रूप्येव जीव इत्यवमवष्टम्भवत् षष्ठमिति ॥ ६ ॥ सव्वमिण जीवा, वायुना चलत्' पुद्गलकायस्य दर्शनात् सर्वमेवेद वस्तु जीवा एव चलनधर्मोपेतत्वादिति एव निश्चयवत् सप्तममिति ॥ ७ ॥ परिचज्जन्तोत्ति विभङ्गज्ञानोपलब्धार्थप्ररूपणां परिहरन्नित्यर्थ । गुत्तो इत्यादि पूर्ववदिति, तथा—

पिण्डेसणपाणेसण उग्गहसत्तिक्कया महज्झयणा । उवसपन्नो जुत्तो रक्खामि महव्वये पञ्च ॥ १९ ॥

पिण्ड. समयभाषया भक्त तस्यैषणा ग्रहणप्रकाराः–पिण्डैषणास्ताश्चैता.–" ससट्ठा १, मससट्ठा २, उद्धड, ३, तह अप्पलेविया चेव ४; । उग्गहिया ५, पग्गहिया ६, उज्झियधम्मा य सत्तमिया ॥ ७ ॥ " तत्रासंसृष्ट हस्तमात्राभ्या चिन्तनीया–" अससट्ठे हत्थे अससट्ठे मत्ते अखरडिएत्ति जुत्त भवइ " एव गृह्णत' प्रथमा भवति । गाथाया सुखमुखोच्चारणार्थोऽन्यथा पाठः ससृष्टापि ताभ्यामेव चिन्त्या " ससट्ठे हत्थे समट्ठे मत्ते खरडिएत्ति जुत्त भवइ " एव गृह्णतो द्वितीया, उद्धृता नाम स्थाल्यादौ स्वयोगेन भोजनजातमुद्धृत ततो " अससट्ठे हत्थेससट्ठे मत्ते अससट्ठे वा मत्ते ससट्ठे हत्थे" एव गृह्णतस्तृतीया। अल्पलेपा नाम अल्पशब्दोऽभाववाचकः निर्लेप पृथुकादि गृह्णतश्चतुर्थी । अवगृहीता नाम भोजनकाले शरावादिपूपहृतमेव भोजनजात यत्ततो गृह्णतः–पञ्चमी । प्रगृहीता नाम भोजनवेलाया दातुमभ्युद्यतेन करादिना प्रगृहीत यद्भोजनजातं भोक्तु वा स्वहस्तादिना तद्गृह्णत'–षष्ठी । उज्झितध-

भोजनजातमन्ये च द्विपदादयो नावकांक्षन्ति तत् अर्द्धत्यक्तं वा गृह्णतः-सप्तमीति ॥ ७ ॥ पानैषणा अप्येता
र्म्मा नाम यत्परित्यागार्हं भोजनजा... एवं नवरं चतुर्थ्यां नानात्वं तात्र ह्यायामसौवीरकादि निर्लेपं विज्ञेयमिति । 'उग्गहत्ति'-सूचकत्वादवग्रहप्रतिमा । अवगृह्यत इत्यवग्रहो वसतिः तत्प्रतिमा अभिग्रहा अवग्रहप्रतिमाः, तत्र पूर्वमेव विचिन्त्यैवंभूतः प्रतिश्रयो मया ग्राह्यो नान्यथाभूत इति तमेव याचित्वा तद्गृह्णतः-प्रथमा १। तथा-यस्य भिक्षोरेवंभूतोऽभिग्रहो भवति, तद्यथा-अहं च खल्वेषां साधूनां कृते अवग्रहं ग्रहीष्यामि, अन्येषां चावगृहे गृहीते सति वत्स्यामीति-द्वितीया २ । प्रथमा सामान्येन इयं तु गच्छान्तर्गतानां सांभोगिकानां चोद्युक्तविहारिणां यतस्ते-ऽन्योन्यार्थं याचन्त इति तृतीया, त्वियं अन्यार्थमवग्रहं याचिष्ये अन्यावगृहीते तु न स्थास्यामीति एपा त्वहालंदि (तु यथालन्दि)-कानां यतस्ते सूत्रावशेषमाचार्यादभिकांक्षन्त आचार्यार्थं तं याचन्त इति ३ । चतुर्थी-पुनरहमन्येषां कृतेऽवग्रहं न याचिष्ये, अ-न्यावगृहीते तु वत्स्यामीतीयं तु गच्छ एवाभ्युद्यतविहारिणां जिनकल्पाद्यर्थं परिकर्म्म कुर्व्वताम् ४ । पञ्चमी-तु अहमात्मकृते अवग्रहमवग्रहीष्यामि न चापरेषां द्वित्रिचतुःपञ्चनामिति । इयं तु जिनकल्पिकस्येति ५ । पष्ठी-पुनर्यदीयमवग्रहं ग्रहिष्यामि तदीय-मेव चेत्कटादिसंस्तारकं ग्रहीष्यामि इतरथोत्कडुको वा उपविष्टो वा रजनीं गमिष्यामीत्येपापि जिनकल्पिकादेरिति ६ । सप्तमी-एपैव पूर्वोक्ता नवरं यथास्तृतमेव शिलादिकं गृहीष्यामि नेतरदिति ॥ ७ ॥

सत्तिक्कयत्ति-सप्त सप्तैकका: अनुद्देशकतयैकसरत्वेनैकका अध्ययनविशेपा आचाराङ्गस्य द्वितीयश्रुतस्कन्धे द्वितीयचूडारूपास्ते च समुदायतः सप्तेति कृत्वा सप्तैकका अभिधीयन्ते, तेपामेकोऽपि सप्तैकक इति व्यपदिश्यते तथैव नामत्वात्, एवं च ते सप्तेति, तत्र

१ सांभोगिकाऽसांभोगिकानाम्० प्र० ।

प्रथमः-स्थानसप्तैकको, द्वितीयो-नैषिधिकीसप्तैकक नैषेधिकी-स्वाध्यायभूमिः, तृतीयः-उच्चारप्रश्रवणविधिसप्तैककः, चतुर्थ-शब्दसप्तैककः, पञ्चमो-रूपसप्तैककः, षष्ठः-परक्रियासप्तैककः, सप्तमः-अन्योन्यक्रियासप्तैकक इति। तथा-'महज्झयणत्ति' सूत्रकृताङ्गस्य द्वितीयश्रुतस्कन्धे महान्ति, प्रथमश्रुतस्कन्धाध्ययनेभ्यः सकाशाद्ग्रन्थतो बृहन्त्यध्ययनानि तानि च-पुण्डरीक १, क्रियास्थान २, आहारपरिज्ञा ३, प्रत्याख्यानक्रिया ४, अनाचारश्रुत ५, आर्द्रककुमारीय ६, नालन्दीयश्चेति ७। 'उवसंपन्नो जुत्तो' इत्यादि सूत्र तु प्राग्वदिति, तथा—

अट्ठ मयट्ठाणाइ अट्ठ य कम्माइ तेसि बन्ध च। परिवज्जन्तो गुत्तो रक्खामि मह्व्वए पञ्च ॥ १६ ॥

अष्टौ जातिकुलबलरूपतपऐश्वर्यश्रुतलाभभेदादष्टसंख्यानि मदस्थानानि मदभेदाः, तत्र मातृकी विप्रादिका वा जातिः, पैतृकमुग्रादिक वा कुल, शक्तिर्बल, शरीरसौंदर्य-रूप, अनशनादि-तपः, सम्पदः-प्रभुत्व-ऐश्वर्यं, बहुशास्त्रज्ञता श्रुत, अभिलषितवस्तुप्राप्तिर्लाभः। अत्र च दोषः-" जात्यादिमदोन्मत्त' पिशाचवद्भवति दुःखितश्चेह। जात्यादिहीनता परभवे च निःसशय लभत " ॥१॥ इति। अष्टौ च ज्ञानावरणदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रान्तरायमूलप्रकृतिभेदादष्टसंख्यानि कर्म्माणि, तेसिं बन्ध चेति तेषामष्टविधकर्म्मणा बन्धोऽभिनवग्रहण त च तद्धेतुपरिहारतः समवसेय, परिवर्जयन्नित्यादि पूर्ववदिति। तथा—

अट्ठ य पवयणमाया दिट्ठा अट्ठविहनिट्ठियट्ठेहिं। उवसपन्नो जुत्तो रक्खामि मह्व्वए पञ्च ॥ १७ ॥

अष्टौ चेर्यासमित्यादिभेदादष्टसंख्या एव, का इत्याह-प्रवचनस्य द्वादशाङ्गस्य मातर इव तत्प्रसूतिहेतुत्वान्मातरो जनन्यः प्रव-

समितिरीर्यायां गमने समित्यश्चक्षुर्व्यापारपूर्वतयेतीर्यासमितिः, यदाह-ईर्यासमितिर्नाम रथशक-
चनमातरः, तत्र सम्यगितिः प्रवृत्तिः समितिरीर्यायां गमने समित्यश्चक्षुर्व्यापारपूर्वतयेतीर्यासमितिः, यदाह-ईर्यासमितिर्नाम रथशक-
टयानवाहनाक्रान्तेषु सूर्यरश्मिप्रतापितेषु, प्रासुकविविक्तेषु पथिषु युगमात्रदृष्टिना भूत्वा गमनागमनं कर्तव्यमिति, अत्रोदाहरणं—

एगो साहू समणगुणभाविओ इरियासमिईए जुत्तो विहरइ, एत्थन्तरे सक्कस्स आसणं चलियं, पउत्तावाही, साहुं दट्ठुं परम-
भत्तीए वन्दइ णमंसइ य, देवसभामज्झगओ मिच्छदिट्ठी एगो देवो असद्दहन्तो समागओ साहुस्स विहारभूमिं पइ पइट्ठियस्स पुरओ
मच्छियप्पमाणाओ मण्डुकलियाओ विउव्वइ, पच्छओ य मउम्मत्तहत्थिं, तहावि गइं न भिन्दइ, तओ हत्थिणा उक्खिविऊण भू-
मीए पाडिओ, न य सो भयवं नियसरीरं गणेइ, किन्तु सत्ता मे मारियव्वत्ति जीवदयापरिणओ अच्छइ, देवोवि अचलियसत्तं
साहुं पेहित्ता इन्दवुत्तन्तं निवेइत्ता देवलोगं गओत्ति। तथा—भाषायां भाषणे समितिर्निरवद्यभाषणतो भाषासमितिः, आह च—"भाषा-
समितिर्नाम हितमितासंदिग्धभाषणम् । " अत्राप्युदाहरणम्—

कोई साहू भिक्खट्ठा नगरे रोहए निग्गन्तुं वाहिरकडए हिण्डंतो केणई पुट्ठो,जहा—" केवइय आसहत्थी तह निचओ दारुधन्न-
माईणं । निविन्नानिविन्ना नागरगा वेहि मं समिओ ॥ १ ॥ वेइ न जाणामोत्ती सज्झायज्झाणजोगवक्खित्ता । हिण्डन्ता नवि
पेच्छह नवि सुणह य किह णु तो वेइ ॥ २ ॥ बहुं सुणेइ कण्णेहिं बहुं अच्छिहि पेच्छई । नयदिट्ठं सुयं सव्वं भिक्खू अक्खा-
उमरिहई " ॥ ३ ॥ तथा—एषणायामुद्गमादिदोषवर्जनतः समितिरेषणासमितिः, उक्तं च—"एषणासमितिर्नाम गोचरगतेन मुनिना
सम्यगुपयुक्तेन नवकोटीपरिशुद्धं ग्राह्यमिति " । अत्र—

वसुदेवपुव्वजम्मो आहरण एसणाए समिईए मगहागोव्वरगामे गोयमधिज्जाई चक्कयरो ॥ १ ॥ तस्स य धारिणि भज्जा गब्भो तीए कयाइ आहूओ । धिज्जाइ मओ छम्मासगब्भधिज्जाइणी जाए ॥ २ ॥ माउलसवड्ढणकम्मकरणवेयारणा य लोगेण । नत्थि तुह एत्थ किंचि तो वेई माउलो त च ॥ ३ ॥ मा सुण लोगस्स तुम धूयओ तिन्नि तेसि जेट्ठयर । दाहामि करे कम्म पकओ पत्तो य वीवाहो ॥ ४ ॥ सा नेच्छती विसन्नो माउलओ वेति वीय दाहामि । सावि य तहेव णिच्छइ तइयत्ती णिच्छई सावि ॥५॥ निव्विन्नदिवड्ढणआयरियाण सगासि निक्खन्तो । जाओ छट्ठक्खमओ गिण्हइ य अभिग्गहमिम तु ॥ ६ ॥ बालगिलाणादीण वेयावच्च मए उ कायव्व । त कुणइ तिव्वसड्ढो खायजसो सक्कगुणकित्ती ॥ ७ ॥ असद्दहाणे देवस्स आगमो कुणइ दो समणरूवे । अइसारगहियमेगो अविठिओ अइगओ बीओ ॥ ८ ॥ वेइ गिलाणो पडिओ वेयावच्च तु सद्दहे जो उ । सो उट्ठेउ खिप्प सुय च त नन्दिसेणेण ॥ ९ ॥ छट्ठोववासपारणगभाणिय कवलघेत्तुकामेण । त सुयमित्त सहसुट्ठिओ य भण केण कज्जति ॥ १० ॥ पाणगदव्व व तहिं ज नत्थि तेण वेइ कज्ज तु । निग्गयहिण्डन्तो कुणयणेसण नवि य पेल्लेइ ॥ ११ ॥ इय एकवार विइय च हिण्डिउ लद्ध तइय वरमि । अणुकपाए तुरन्तो तओ गओ तस्सगास तु ॥ १२ ॥ खरफरुसनिट्ठुरेहि य अक्कोसइ सो गिलाणओ रुट्ठो । हे मन्दभग्ग ! फुक्किय तूससि त नाममेत्तेण ॥ १३ ॥ साहुवगारित्ति अह नामत्थ (वहसीतिगम्यते) अह समुद्दिसिउमाउ (ओ) । एयावत्थाए अहं तं अच्छसि भत्तलोहिल्लो ॥ १४ ॥ अमियमिव मन्नमाणो त फरुसगिर तु सो असभन्तो । चलणगओ खामेई धुयइ य त असुइमललित्त ॥ १५ ॥ उट्ठेह वयामोत्ती तह काहामी जहा उ अचिरेण । होहिह निरुया तुब्भे वेई न चएमि गन्तु जे ॥ १६ ॥ आरुह ता पट्ठीए आरूढो ताहे तो पयार च । परमासुइदुग्गध मुयई पट्ठए फरुस च ॥ १७ ॥ वेइ गिर धिद्धि मुण्डिय वेगविघाओ कउत्ति दुक्खविओ

न गणेइ फरुसगिरं न यावि तं तारिसं असुइगन्धं । चन्दणमिव मन्नन्तो इय बहुविहमक्कोसई पए पए सोवि भगवं तु ॥ १८ ॥ न गणेइ फरुसगिरं न यावि तं तारिसं असुइगन्धं । चन्दणमिव मन्नन्तो मिच्छामिह दुक्कडं भणइ ॥ १९ ॥ चिन्तेई कह करेमी किह हु समाही भवेज्ज साहुस्स । इय बहुविहप्पयारं नवि तिन्नो जाहे खोभेउं ॥ २० ॥ ताहे अभित्थुणन्तो गओ तओ आगओ य इयरो उ । आलोइए गुरूहिं धन्नोत्ति तओ अणुसिट्ठो ॥ २१ ॥ जइ तेण एसणा नो मिन्ना इय एसणाइ जइयव्वं । सव्वेण सया अदीणभावओ सुद्धजोएणन्ति ॥ २२ ॥ तथा—आदाने ग्रहणे भाण्डमात्राया उपकरणमात्राया भाण्डस्य वा वस्त्राद्युपकरणस्य मृन्मयादिपात्रस्य वा मात्रस्य च साधुभाजनविशेषस्य निक्षेपणायां च समितिः, सुप्रत्युपेक्षितसुप्रमार्जितक्रमेणेतिः—आदानभाण्डमात्रनिक्षेपणासमितिः;—अत्राप्युदाहरणम्—

एकस्स आयरियस्स पंच सीससयाइं, तेसिमेगो सिट्ठिसुओ पव्वईओ; सो जो जो साहू एइ तस्स २ डण्डगं निक्खिवइ, एवं तस्स उट्ठियस्स अन्नो एइ अन्नो जाइ तहावि सो भगवं अतुरियं अचवलं उवरिं हेट्ठा पमज्जिउं ठवेइ, एवं बहुएणवि कालेण न परितम्मइ । तथा—उच्चारप्रस्रवणखेलसिङ्घानजल्लानां पारिष्ठपनिकायां समितिः स्थण्डिलशुद्धयादिक्रमेण सम्यक्प्रवृत्तिः उच्चारप्रस्रवणखेलसिङ्घानजल्लपारिष्ठापनिकासमितिः, तत्रोच्चारः—पुरीषं, प्रस्रवणं—मूत्रं, खेलो—निष्ठीवनं, सिङ्घानो—नासिकाश्लेष्मा, जल्लो—मल इति; एत्थ इमं आहरणं—

एगेणं खुड्डगेण दिवसन्ते किहवि न पेहिय थण्डिल, काइयालायतो राओ थण्डिलं न पेहियन्ति न वोसिरे, देवयाए उज्जोओ अणुकंपाए य कओ, दिट्ठा भूमित्ति वोसिरियन्ति । तथा—मनसश्चित्तस्य कुशलस्य प्रवर्त्तनेन अकुशलस्य निरोधनेन गोपनं गुप्तिर्मनोगुप्तिः

" मणगुत्तीए तहिय जिणदासो सावओ उ सिट्ठिसुओ । सो सव्वराइपडिमं पडिवन्नो जाणसालाए ॥ १ ॥ भज्जुब्भामियप-छङ्क घेत्तु खीलजुयमागया तत्थ । तस्सेव पायमुवरि मञ्चगपायं ठवेऊण ॥ २ ॥ अणयारमायरन्ती पाओ विद्धो य मञ्चखीलेण । सो य महन्तं वियणं अहियासेई तहिं सम्मं ॥ ३ ॥ नय मणदुक्कडमुप्पन्नं तस्स झाणम्मि निचलमइस्स दट्ठूणवि य विलीयं य म-णगुत्ती करेयव्वा ॥ ४ ॥ तथा वाचोऽकुशलवचनस्य निरोधेन कुशलस्य चोदीरणेन गुप्तिर्वाग्गुप्तिः ॥ ५ ॥"

" वइगुत्तीए साहू सन्नायगपल्लिगच्छए दट्ठु । चोरग्गहसेणावइविमोइओ भणइ मा साह ॥ १ ॥ चलिया य जन्नजत्ता सन्नायग मिलिय अतरा चेव । मायपियभायमाई सोवि नियत्तो सम तेहिं ॥ २ ॥ तेणेहिं गहियमुसिया दिट्ठे ते वेन्ति सो इमो साहू । अ-म्हेहिं गहियमुक्को तो वेई अम्मया तस्स ॥ ३ ॥ तुम्हेहिं गहिय मुक्को आम आणेहि वेइ तो छुरियं । ज छिन्दामि थणन्ती किं ति सेणावई भणइ ॥ ४ ॥ दुजमजाय एसो दिट्ठा तुब्भे तहवि नवि सिट्ठं । किह पुत्तोत्ति अह मम किह न वि सिट्ठ तु धम्मकहा ॥ ५ ॥ आउट्टो उवसन्तो मोक्का मज्झपि त सि माइत्ति । सव्वं समप्पियं से वइगुत्ती एव कायव्वा ॥ ६ ॥" तथा कायस्य गोपनं कायगुप्तिः प्रयोजनभावे करणचरणाद्यवयवसलीनता, प्रयोजनोत्पत्तौ तु स्थानादिषु सम्यक्प्रवृत्तिरित्यर्थः ॥

" काइयगुत्ताहरणं अद्धाणपवन्नगे जहा साहू । आवासियम्मि सत्थे न लहइ तहिं थण्डिलं किञ्चि ॥ १ ॥ लद्धं चणेण कहवि एगो पाओ जहिं पइट्ठाइ । तहिय ठिएगपाओ सव्वं राइं तहिं थ(घ)ट्ठो ॥ २ ॥ नय ठविय किंचि अत्थंडिलमि होयव्वमेव गुत्तेण । सुमहब्भए वि अहवा साहु न भिन्दे गइं एगो ॥ ३ ॥ सक्कपससा असद्दहाण देवागमो विउव्वइ य । मण्डुकलिया साहू जयणा सो (ए) सङ्कमे सणियं ॥ ४ ॥ हत्थी विउव्विओ जा आगच्छइ मग्गओ गुलगुलिन्तो । नय गइभेयं कुणइ करिणा हत्थेण उच्छूढो ५॥

वेउ पडन्तो मिच्छामिदुकडं जिय विराहियामोत्ति । नवि अप्पाणं चिन्तो देवो तुट्ठो ममं सइयत्ति ॥ ५ ॥ एता अष्टापि प्रवचनमातरो दृष्टा उपलब्धाः कैरित्याह–अष्टविधा अष्टप्रकारा निष्ठिताः. क्षयं गता अर्थाः, प्रक्रमात् ज्ञानावरणादिपदार्था येषां ते तथा तैरष्टविधनिष्ठितार्थैर्जिनैरित्यर्थः । उवसंपन्नो जुत्तो इत्यादि पूर्ववदिति, तथा–

नव पावनियाणाइं संसारत्था य नवविहा जीवा । परिवज्जन्तो गुत्तो रक्खामि महव्वए पञ्च॥ १८ ॥

नव नवसंख्यानि, पापानि–पापनिबन्धनानि, निदानानि–भोगादिप्रार्थनालक्षणानि, पापनिदानानि–तानि परिवर्ज्जन्निति योगः, तानि चामूनि लेशतः " निग्गंथो वा निग्गन्थी वा नियाणं करेइ जहा सक्खं न मेदेवा देवलोगा वा दिट्ठाता इमे चेव महिड्ढिया रायाणो देवा, ता जइ इमस्स तवनियमबंभचेरस्स फलमित्थ ताहमिव आगमिस्साए राया भवित्ता ओराले माणुस्से भोगे भुञ्जमाणे विहरिज्जामि, तओ नियाणकडे देवलोगं गच्छेज्जा, तओ चुयस्स नियाणाणुरूवलद्धट्ठाणस्स तस्स कोइ समणाई धम्मंमाइक्खेज्जा, ! हन्ता आइक्खेज्जा, से धम्मं पडिवज्जेज्जा ! नो इणमट्ठे समट्ठे दुल्लभबोहिए भवइ ॥ १ ॥ केई धम्मं सोचा निक्खंन्ते अणगारे परीसहपराइए चिन्तइ, राया बहुचिन्ते बहुवावारे भवइ, तो जे इ मे उग्गाइपुत्ता विभवसंपन्ना ते पासित्ता नियाणं करेइ, जइ मे इमस्स तवनियमबम्भचेरवासस्स फलमत्थि, तो उग्गाइपुत्तो विभवसंपन्नो भविज्जा, तओ देवलोगपचायाओ उग्गाइकुले जाओ नियाणाणुरूवे भोगे भुञ्जमाणो विहरइ, सो धम्ममाइखिज्जमाणंपि नो पडिवज्जइ जाव दुल्लभबोहिए भवइ ॥ २ ॥ एवं निग्गन्थीवि, निग्गंथो नियाणं करोति, पुमं बहुवावारो सङ्गामाइसु दुक्करकारी य, ता अलं मे पुरिसभावेण, अन्नजंमेहं इत्थिया भवेज्जा, एस वि

नियाणाणुरूवो उप्पज्जइ, धम्म नो पडिवज्जइ दुल्लहबोहिए भवइ ३ ॥ निग्गन्थीवि उग्गादिपुत्त पासित्ता नियाण करेइ इत्थी ण असमत्था, एगागिणी गामन्तराइसञ्चरणे सव्वपरिभूया वयणिजट्ठाण सव्वकाल पराहीणा य, अओह अन्नजम्मे उग्गाइपुत्तो भवेज्जा, तहेव भवइ, नो धम्म पडिवज्जई दुल्लभबोहिए भवइ ४ ॥ निग्गन्थो निग्गन्थी वा दिन्तेई, ईमे माणुस्सगा कामभोगा मुत्तपुरीसवन्तपित्तमिमसुक्काइआसवा, जे पुण इमे देवा अन्न देव देविं वा अत्ताण वा देवदेवीरूव विउविता परियारन्ति, एय साहु, तोहमवि तहाविहदेवो भवेज्जा, तहेव भवइ, तओ चुए पुमे जाए धम्ममाइक्खिज्जमाण सुणेइ, न पुण सद्दहइ ५ ॥ निग्गन्थो नि गन्थी वा नियाण करेइ, असुभा माणुस्साण भोगा, जे पुण देवलोगेसु देव नो अन्न देव देविं वा परियारन्ति, किं तु अत्ताणमेव देवदेवीरूव विउविता परियारन्ति एय साहु तोहमवि तेसु भवामि तहेव भवइ तओ चुयस्स कोइ धम्ममाइक्खेज्जा सुणेज्जा नो सद्दहेज्जा नवरमारम्भियइसमणो भवित्ता तहाविहविरइवज्जिओ परोवघायगसत्थोवएसपरायणो इत्थीकामसुच्छिओ मओ समाणो असुरेसु किब्बिसियत्ताए उववज्जेत्ता चुओ समाणो भुज्जो २ एलमूयत्ताए उववज्जइ दुल्लभबोहिए भवइ ६ ॥ निग्गन्थो निग्गन्थी वा निव्विन्नदिव्वमणुयकामभोगो नियाण करेइ, जइ इम्मस्स धम्मस्स फलमत्थि तो जत्थ नोपरियारणा तत्थाह भवेज्जामि, तत्थेव भवइ, तओ चुयस्स मणुस्सु उववन्नस्स समणे धम्माइक्खेज्जा, त सुणेइ, सद्दहइ नो देसविरइपि पडिवज्जइ, दसणसावए अहिगयजीवाजीवे सुलभबोहिए भवइ ७ ॥ निग्गन्थो निग्गन्थी वा दिव्वमाणुस्सएसु भोगेसु निविन्नो धमस्सद्धिओ चिन्तेइ, इमे उग्गाइपुत्ता अणुव्वयगुणव्वयाइठिया साहवो पडिलाभेमाणा विहरन्ति, एय साहु, एव नियाण करेत्ता देवेसु उववज्जिय उग्गादिपुत्तभावट्ठिओ दुवालसविह अगारधम्म पडिवज्जइ नो अणगारधम्मन्ति ८ ॥ निग्गन्थो निग्गन्थी वा कामभोगनिविन्नो नियाण करेइ, जइ मे तव-

नियमफलमत्थि ताहं दरिद्दकुले उववज्जामि, एवं मे अप्पा सुनीहरए भविस्सइ, एवं कयनियाणो देवेसु उववज्जित्ता दरिद्दकुलोववन्नो धम्मं सोच्चा जाव पव्वयइ नो सिज्झइ ॥ ९ ॥

" एवं नच्चा अनियाणेण भवियव्वं ति " तथा संसरन्ति कर्म्मवशवर्त्तिनः प्राणिनः परिभ्रमन्ति यस्मिन्निति संसारस्तत्र तिष्ठन्तीति संसारस्थाश्चः समुच्चये, नवविधाः पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियभेदान्नवसंख्याः, क इत्याह–जीवाः प्राणिनस्तान् परिवर्जयन्नित्यादि पूर्ववदिति । चूर्णौ तु–" नवविहदंसणवरणं नव य नियाणा नवविहा जीवा " इत्यादिपाठव्याख्या दृश्यते, तत्र नवविधं नवभेदं, किं तदित्याह—

सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधो दर्शनं तस्यावरणस्वभावं कर्म्म दर्शनावरणं तन्नवविधं, तत्र निद्रापञ्चकं तावत् 'द्रा कुत्सायां गतौ' नियतं द्राति कुत्सितत्वमविस्पष्टत्वं गच्छति चैतन्यमनयेति निद्रा सुखप्रबोधा स्वापावस्था, नखच्छोटिकामात्रेणापि यत्र प्रबोधो भवति, तद्विपाकवेद्या कर्म्मप्रकृतिरपि निद्रेति कार्येण व्यपदिश्यते, तथा निद्रातिशायिनी निद्रा निद्रानिद्रा शाकपार्थिवादित्वान्मध्यपदलोपी समासः, सा पुनर्दुःखप्रबोधा स्वापावस्था तस्यां ह्यस्फुटतरीभूतचैतन्यत्वाद्दुःखेन बहुभिर्घोलनादिभिः प्रबोधो भवत्यतः सुखप्रबोधनिद्रापेक्षयाऽस्या अतिशायिनीत्वं, तद्विपाकवेद्या कर्म्मप्रकृतिरपि कार्यद्वारेण निद्रानिद्रेत्युच्यते । उपविष्ट ऊर्ध्वस्थितो वा प्रचलत्यस्यां स्वापावस्थायामिति प्रचला, सा ह्युपविष्टस्योर्ध्वस्थितस्य वा घूर्णमानस्य स्वप्तुर्भवति, तथाविधविपाकवेद्या कर्म्मप्रकृतिरपि प्रचलेति, तथैव प्रचलातिशायिनी प्रचला प्रचलाप्रचला, सा हि चंक्रमणादि कुर्वतः स्वप्तुर्भवत्यतः स्थानस्थितस्वप्तृभवां प्रचलामपेक्ष्यातिशायिनी, तद्विपाका कर्म्मप्रकृतिरपि प्रचलाप्रचला । स्त्याना बहुत्वेन संघातमापन्ना गृद्धिरभिकांक्षा

जाग्रदवस्थाध्यवसितार्थसाधन विषयो यस्या स्वापावस्थाया सा स्त्यानगृद्धिः, तस्या हि सत्या जाग्रदवस्थाध्यवसितमर्थमुत्थाय साधयति, स्त्याना वा पिण्डीभूता ऋद्धिरात्मशक्तिरूपाऽस्यामिति स्त्यानर्द्धिरित्युच्यते, तद्भावे ही प्रथमसंहननिनः स्वप्तुः केशवार्द्धबलसदृशीशक्तिर्भवति, अथवा–स्त्याना जडीभूता चैतन्यर्द्धिरस्यामिति स्त्यानर्द्धिरिति तादृशविपाकवेद्या कर्म्मप्रकृतिरपि स्त्यानर्द्धिः, स्त्यानगृद्धिरिति वा । तदेव निद्रापञ्चक दर्शनावरणक्षयोपशमाल्लब्धात्मलाभाना दर्शनलब्धीनामावारकं दर्शितम् । साम्प्रत यद्दर्शनलब्धीना मूलत एव लाभमावृणोति तदिद दर्शनावरणचतुष्कमाख्यायते–चक्षुषा दर्शन सामान्यग्राही बोधः चक्षुर्दर्शन तस्यावरण चक्षुर्दर्शनावरण, अचक्षुषा चक्षुर्वर्जेन्द्रियचतुष्टयेन मनसा वा यद्दर्शन तदचक्षुर्दर्शन तस्यावरणमचक्षुर्दर्शनावरण, अवधिना रूपिद्रव्यमर्यादयाऽवधिरेव वा कारणनिरपेक्षबोधरूपो दर्शन सामान्यार्थग्रहणमवधिदर्शन तस्यावरणमवधिदर्शनावरण, केवल च तद्दर्शन च केवलदर्शन तस्यावरण केवलदर्शनावरणमित्येव नवविध दर्शनावरणमिति, शेष पूर्ववदिति । तथा—

नवबम्भचेरगुत्तो दुनवविहं बम्भचेरपरिसुद्ध । उवसपन्नो जुत्तो रक्खामि महव्वए पञ्च ॥ १९ ॥

नवबम्भचेरत्ति सूचकत्वान्नवब्रह्मचर्यगुप्तिभिस्तत्र ब्रह्मचर्यस्य मैथुनव्रतस्य गुप्तयो रक्षाप्रकारा. ब्रह्मचर्यगुप्तयो नव च ता ब्रह्मचर्यगुप्तयश्च नवब्रह्मचर्यगुप्तयस्ताभिर्गुप्त' सुसवृतस्सन्निति ताश्चैताः–" वसहिकहनिसिज्जिन्दियकुड्डन्तरपुव्वकीलियपणीए । अइमायाहारविभूसणा य नव बम्भगुत्तीओ" । ब्रह्मचारिणा तद्गुप्त्यनुपालनपरेण न स्त्रीपशुपण्डकससक्ता वसतिरासेवनीया, तत्सेवनेतद्बाधासम्भवात् आह च–"जहा निरालानसहस्स मूले न मूसगाण वसही पसत्था । एमेव इत्थीनिलयस्स मज्झे नवबभयारिस्स खमो निवासो ॥१॥

बंभवयस्स अगुत्ती लज्जानासो य पीइवुड्ढी य । साहु तवो वणवासो निवारणं तित्थहाणी य २ ॥ चङ्कमियं मोट्टियं च विप्पिविखयं च सविलासं । सिङ्गारे य बहुविहे दट्ठुं भुत्तेयरे दोसा ३॥ गीयाणि य पढियाणि य हसियाणि य मंजुले य उल्लावे । भूसणसद्दे राहस्सिए य सोऊण जे दोसा ॥ ४ ॥ पसुपण्डगेसुवि इहं मोहानलदीवियाणं जं होइ । पायमसुहा पवित्ती पुव्वभवब्भासओ तहय ॥ ५ ॥ तथा—कहत्ति न स्त्रीणां केवलानामेकाकिनीनां धर्म्मदेशनादिलक्षणवाक्यप्रबन्धरूपा कथा कथनीया, अथवा जातिकूलरूपनेपथ्यलक्षणा स्त्रीकथा न कथनीया, तत्र ब्राह्मणीप्रभृतीनामन्यतमायाः प्रशंसा निन्दा वा या सा जातिकथा, यथा—"धिग्ब्राह्मणीर्धवाभावे या जीवन्ति मृता इव । धन्या मन्ये जने शूद्रीः पतिलक्षेप्यनिन्दिताः" ॥१॥ इति । एवं चोग्रादिकुलोत्पन्नानामन्यतमाया यत्प्रशंसादि सा कुलकथा—यथा "अहो चौलुक्यपुत्रीणां साहसं जगतोऽधिकम् । पत्युर्मृत्यौ विशन्त्यग्नौ, याः प्रेमरहिता अपीति" ॥१॥ तथान्ध्रीप्रभृतीनामन्यतमाया रूपस्य यत् प्रशंसादि सा रूपकथा यथा—"चन्द्रवक्त्रा सरोजाक्षी सद्गीः पीनघनस्तनी । किं लाटीनो मता सास्य देवानामपि दुर्लभेति" ॥१॥ तासामेवान्यतमायाः कच्छबन्धादिनेपथ्यस्य यत्प्रशंसादि सा नेपथ्यकथा यथा—"धिङ्नारीरौदीच्या बहुवसनाच्छादिताङ्गलतिकत्वात् । यद्यौवनं न यूनां चक्षुर्मोदाय भवति सदेति" ॥१॥ स्त्रीकथायां चैते दोषाः—" आयपरमोहुदीरणउड्डाहो सुत्तमाइपरिहाणी । बंभवए य अगुत्ती पसङ्गदोसो य गमणाई " । तथा—निसिज्जत्ति निषद्या, कोऽर्थः? स्त्रीभिः सहैकासने नोपविशेदुत्थितासु मुहूर्त्तं नोपविशेत्तदुपभुक्तासनस्य चित्तविकारहेतुत्वाद्यदाह—"इत्थीए मलियसयणासणम्मि तप्फासदोसओ जइणो । दूसेइ मणं मयणो कुट्ठं जह फासदोसेणं" । तथा—इन्द्रियाणि स्त्रीसक्तनयननासिकादीनि मनोहराणि नावलोकयेत्, तद्दर्शनस्य मोहोदयहेतुत्वात् यदाह—"चित्रेऽपि लिखिता नारी मनो मोहयते नृणाम् । किं पुनस्ताः स्मितस्मेरविभ्रमभ्रमितेक्षणाः" तस्मात्—"चित्तभित्तिं

न निज्झाए नारिं वा सुअलंकियं । भक्खरपि व दट्ठूण दिट्ठिं पडिसमाहरे" तथा-"वज्जेज्जा मोहयर जुनईण दसणाइ सुवियार। एए खु मयणनाणा चरित्तपाणे विणासेंति" तथा-कुड्डिन्तरत्ति न स्त्रीणा कुड्यान्तरिताना मोहनससक्ताना, क्वणितादिध्वनिराकर्णयितव्यो मोहसमवादेव । तथा-'पुव्वकीलियत्ति' न पूर्वं गृहस्थावस्थाया क्रीडितं स्त्रीसभोगानुभवनलक्षण द्यूतादिरमणलक्षण वानुस्मरेन्मोहोत्थापननिमित्तत्वादिति । तथा-'पणीयत्ति' प्रणीत सरस स्निग्धमित्यर्थः, भक्त न भुञ्जीत धातूद्रेकहेतुत्वात् यदाह—

" विगई परिणइधम्मो मोहो जमुदिज्जए उदिन्ने य । सट्ठुवि चित्तजयपरो कह अकज्जे न वट्टिहिदी ॥ १ ॥ दावानलमज्झगओ को तदुवसमट्ठयाए जलमाई । सन्तेवि न गिण्हिज्जा मोहानलदीवि एसुवमा ॥ २ ॥ " किं च-"रसा पगाम न निसेवियव्वा पाय रसा दित्तिकरा नराण । दित्त च कामा समभिद्दवन्ति दुम जहा सादुफल च पक्खी ॥ ३ ॥ जहा दवग्गी पउरिन्धणे वणे समारुओ नोवसम उवेइ । एविंदियग्गी वि पगामभोइणो न बभयारिस्स हियाय कस्सई ॥ ४ ॥" तथा-'अइमायाहारत्ति' अतिमात्रस्य "अद्ध असणस्स सव्वजणस्स कुज्जा दवस्स दो भाए । वाउपवियारणट्ठा छब्भाय ऊणय कुज्जत्ति" ॥१॥ एवविधप्रमाणातिक्रान्तस्याहारस्य पानभोजनादेरभ्यवहर्ता सर्वदा न भवेत् तद्भोजने उक्तदोषप्रसङ्गादिति । तथा-'विभूसणा यत्ति' विभूषणा शरीरोपकरणराढा सापि स्वपरचित्तविकारकारणत्वान्न कार्येति नव ब्रह्मचर्यगुप्तय इति ॥ तथा—

'दुनवनिह बभचेरपरिसुद्धति' द्विनवविध अष्टादशप्रकारमित्यर्थो, ब्रह्मचर्यं मैथुनविरतिं, परिशुद्धं निर्दोषं, तच्चौदारिकवैक्रियमैथुनस्य मनोवाक्कायैः करणकारणानुमतिवर्जनाज्जायते इयमत्र भावना-इह मूलभेदतो द्विधाऽब्रह्म भवति, औदारिक तिर्यङ्मनुष्याणा

दिव्यं च भवनवास्यादीनां, तत्रौदारिकं स्वयं न करोति मनसा वाचा कायेन च ।१। नान्येन कारयति मनःप्रभृतिभिः । २ । कुर्वन्तमन्यं नानुमोदते मनःप्रभृतिभिरेव ।३। एवं वैक्रियमपीति । चूर्णौ तु द्वि (दु)गुणं अट्ठारसविहं विवज्जंतोत्ति पाठो व्याख्यातः, अयमप्युक्तानुसारतो भावनीयो, नवरं द्विगुणत्वं प्रकृतनवकस्य व्याख्येयमिति । तथा—

**उवघायं च दसविहं असंवरं तह य संकिलेसं च । परिवज्जन्तो गुत्तो रक्खामि महव्वए पञ्च ॥ २० ॥**

उपहननमुपघातस्तं च दशविधमुद्गमोपघातादिभेदाद्दशप्रकारं वर्जयन् तत्र यदुद्गमेनाधाकर्म्मादिना षोडशविधिनोपहननं विराधनं चारित्रस्य तत्साधकभक्तदेर्वा अंल्पता स उद्गमोपघातः । १ । एवमुत्पादनया धात्र्यादिदोषलक्षणया उपघातः स उत्पादनोपघातः । २ । एषणया—शङ्कितादिभेदया य उपघातः स एषणोपघातः । ३ । परिकर्म वस्त्रपात्रादेः समारचनं तेनोपघातः स्वाध्यायस्य श्रमादिना शरीरस्य संयमस्य वा परिकर्मोपघातः । ४ । परिहरणा अलाक्षणिकस्याकल्प्यस्य चोपकरणस्य परिभोगः तया य उपघातः स परिहरणोपघातः । ५ । तथा—ज्ञानोपघातः श्रुतज्ञानापेक्षया प्रमादतोऽकालस्वाध्यायादिभिः । ६ । दर्शनोपघातः—शङ्कादिभिः । ७ । चारित्रोपघातः समितिभङ्गादिभिः । ८ । अचियत्तमप्रीतिकं तेनोपघातो विनयादेरचयित्तोपघातः । ९ । संरक्षणेन—शरीरादिविषयमूर्छयोपघातः परिग्रहविरतेरिति संरक्षणोपघातः ।१०। तथा—असंवरं तह यत्ति संवरणं संवरः न संवरोऽसंवरः तं, तथैव दशविधं, स चायं—श्रोत्रेन्द्रियस्येष्टानिष्टविषयेषु रागद्वेषाभ्यां प्रवर्त्तमानस्यासंवरणं श्रोत्रेन्द्रियासंवरः एवं चक्षुर्घ्राणरसनस्पर्शनेन्द्रियासंवराः अपि वाच्याः,

१ कल्पता प्र० ।

मनसोऽकुशलस्यासवरोऽनिग्रहो मनोऽसवर एव वागसवरः कायासवरश्च ८। तथा–उपकरणस्याप्रतिनियताकल्पनीयवस्त्रादेरसवरो ग्रहणमुपकरणासवरः। अथवा–विप्रकीर्णस्य वस्त्राद्युपकरणस्यासवरणमुपकरणासंवर., अयचोधिकोपकरणापेक्षः ९। तथा—सूच्याः ग्रहणमुपकरणासवरः । ... कुशाग्राणा शरीरोपघातकारिणा यदसवरणमसङ्गोपन स सूचीकुशाग्रासवरः, एषः तूपलक्षणत्वात्समस्तौपग्रहिकोपकरणापेक्षो द्रव्य इति। 'सङ्किलेस च त्ति' सक्लेशोऽसमाधिः त च दशविध परिवर्जयन्नित्यादि पूर्ववत्स चायं उपधीयते उपष्टम्यते–सयमः सयमप्रधान शरीर वा येन स उपधिर्वस्त्रादिस्तद्विषयः सक्लेश उपधिसक्लेशः १। तथोपाश्रयो वसतिस्तद्विषयः सक्लेशो मनोज्ञामनोज्ञादिद्वारेणासमाधानमुपाश्रय सक्लेशः २। तथा–कषाया एव कषायैर्वा सक्लेशः कषायसक्लेशः ३। तथा–भक्तपानाश्रितः संक्लेशो भक्तपानसक्लेशः ४। तथा–मनसो मनसि वा सक्लेशो मनःसक्लेशः ५। तथा–वाचा सक्लेशो वाक्संक्लेशः ६।तथा–कायमाश्रित्य सक्लेशः कायसक्लेशः ७। तथा–ज्ञानस्य सक्लेशोऽविशुद्धयमानता ज्ञानसक्लेशः ८। एव दर्शनसक्लेशः ९। चारित्रसक्लेशश्चेति १०।।२०।। तथा–

सच्चसमाहिट्ठाणा दस चेव दसाओ समणधम्म च। उवसपन्नो जुत्तो रक्खामि महव्वए पञ्च ॥ २१ ॥

सन्त. प्राणिनः पदार्था मुनयो वा तेभ्यो हित सत्य तद्दशविध तद्यथा–"जणवय १, समय २, ठवणा ३, नामे ४, रूवे ५, पडुच्चसच्चे–य ६। ववहार ७, भाव ८, जोगे ९, दसमे ओवम्म १० सच्चे य" ॥१॥ 'जणवयत्ति' सत्यशब्दः प्रत्येकमभिसवन्धनीयः, ततश्च जनपदेषु देशेषु यद्यदर्थवाचकतया रूढ देशान्तरेपि तत्तदर्थवाचकतया प्रयुज्यमान सत्यमवितथमिति जनपदसत्य, यथा कौङ्कणादिषु पयः पिच्च नीरमुदकमित्यादि, सत्यत्व चास्यादुष्टविवक्षाहेतुत्वान्नानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वेन व्यवहारप्रवृत्त्यङ्गत्वाच्चेत्येव शेषेष्वपि

भावना कार्येति । 'संमयत्ति'–संमतं च तत्सत्यं चेति संमतसत्यं, तथाहि—

कुमुदकुवलयकमलारविन्दादीनां समाने पङ्कसंभवे गोपालादीनामपि संमतमरविन्दमेव पङ्कजमिति, तत्र-कुमुदं–चन्द्रविकाशि, कुवलयं–नीलोत्पलं, कमलं रविकरविकासि, अरविन्दं स्थलपद्ममिति; अतस्तत्र संमततया पङ्कजशब्दः सत्यः कुवलयादावसत्योऽसंमतत्वादिति । 'ठवणत्ति'–स्थाप्यत इति स्थापना, यल्लेप्यादिकमर्हदादिविकल्पेन स्थाप्यते तद्विषये सत्यं स्थापनासत्यं; यथाऽजिनोपि जिनोऽयं अनाचार्योप्याचार्योऽयमिति । 'नामेत्ति'–नामाभिधानं तत्सत्यं नामसत्यं, यथा–कुलमवर्द्धयन्नपि कुलवर्द्धन उच्यते, एवं धनवर्द्धन इति । 'रूवेत्ति'–रूपापेक्षया सत्यं रूपसत्यं यथा प्रपञ्चयतिः प्रव्रजितरूपं धारयन् प्रव्रजित उच्यते न चासत्यताऽस्येति । 'पडुचसच्चे यत्ति'–प्रतीत्याश्रित्य वस्त्वन्तरं सत्यंप्रतीत्यसत्यं यथानामिकाया दीर्घत्वं ह्रस्वत्वं चेति, तथाहि तस्यानन्तपरिणामस्य द्रव्यस्य तत्तत्सहकारिकारणसंनिधाने तत्तद्रूपमभिव्यज्यत इति सत्यता । 'ववहारेत्ति'–व्यवहारेण सत्यं व्यवहारसत्यं, यथा–दह्यते गिरिर्गलति भाजनं, अयं च गिरिगततृणादिदाहे व्यवहारः प्रवर्त्तते, उदके च गलति सतीति । 'भावत्ति'–भावं भूयिष्ठशुक्लादिपर्यायमाश्रित्य सत्यं भावसत्यं, यथा–शुक्ला बलाकेति सत्यपि हि पञ्चवर्णसम्भवे शुक्लवर्णोत्कटत्वात् शुक्लेति । 'योगत्ति'–योगतः सम्बधतः सत्यं, यथा–दण्डयोगाद्दण्डः, छत्रयोगच्छत्र एवोच्यते । 'दशममौपम्य सत्यमिति' उपमैवौपम्यं तेन सत्यमौपम्यसत्यं यथा-समुद्रवत्तडागः देवोऽयं, सिंहस्त्वमिति । सर्वत्रैकारः प्रथमैकवचनार्थो द्रष्टव्यः इहेति 'समाहिठाणत्ति'–समाधे रागादिरहितचित्तस्य स्थानान्याश्रयाः समाधिस्थानानि, तान्यपि दश तद्यथा"–नो इत्थीपसुपण्डगसंसत्ताइं सयणासणाइं सेवित्ता भवइ' नो नैव स्त्रियो देवीनारीतिरश्च्योऽत्रासमाधिदोषः प्रतीत एव, पशवो गवादयस्तत्संसक्तौ हि तत्कृतविकारदर्शनाच्चित्तविकारः संभाव्यत इति ।

पण्डकाश्च नपुसकानि तत्ससक्तौ स्त्रीसमानो दोपः प्रतीत एव, एतैः संसक्तानि समाकीर्णानि स्त्रीपशुपण्डकससक्तानि शयनासनानि सस्तारकपीठकादीनि उपलक्षणतया स्थानादीनि च सेविता तेपा सेवको भवति साधुरित्येक १ । तथा –'नो–इत्थीण कहं कहेत्ता भवति' नो स्त्रीणा केवलानामिति गम्यते, कथा धर्म्मदेशनादिलक्षणवाक्यप्रबन्धरूपा तन्नेपथ्यादिवर्णनरूपा वा कथयिता तत्कथको भवति साधुरिति द्वितीय २ । 'नो पणीयरसभोई भवइ' नो गलत्स्नेहबिन्दुभोक्ता भवति मुनिरिति तृतिय ३ ।, 'नो पाणभोयणस्स अइमाय आहारित्ता भवइ' नो पानभोजनस्य रूक्षस्याप्यतिमात्र 'अद्धमसणस्से'त्यादिप्रमाणातिक्रान्तमाहारकोऽभ्यवहर्त्ता भवति खाद्यस्वाद्ययोरुत्सर्गतो यतीनामयोग्यत्वात्पानभोजनयोर्ग्रहणमिति चतुर्थं ४ ।, 'नोपुव्वरयपुव्वकीलियाइं सरित्ता भवति' नो पूर्वरत नो गृहस्थावस्थाया स्त्रीसभोगानुभवन तथा पूर्वक्रीडित तथैव द्यूतादिरमणलक्षण सर्त्ता चिन्तयिता भवतीति पञ्चममिति ५ । 'नो इत्थीठाणाइं सेवित्ता भवइ' नो स्त्रीणा तिष्ठन्ति येपु तानि स्थानानि निपद्याः स्त्रीस्थानानि तानि सेविता भवति कोऽर्थ.[१], स्त्रीभिः सहैकासने नोपविशेदुत्थितास्वपि हि तासु मुहूर्त्तं नोपविशेदिति पष्ठम् ६ । ' नो इत्थीण इन्दियाइ मणुन्नाइं मणोरमाइ आलोइय [२] निज्झाइत्ता भवइ ' नो स्त्रीणामिन्द्रियाणि नयननासिकादीनि मनो हरन्ति दृष्टमात्राण्याक्षिपन्तीति मनोहराणि तथा–मनो रमयन्ति दर्शनानन्तरमनुचिन्त्यमानान्याह्लादयन्तीति मनोरमाण्यालोक्यालोक्य निध्याता दर्शनानन्तमतिशयेन चिन्तयिता यथाहो! लवणत्व लोचनयोः, ऋजुत्व नासावशस्येत्यादि भवति साधुरिति सप्तममिति ७ । ' नो सद्दाणुवाई, नो रूवाणुवाईम नो गन्धाणुवाई भवइ ' नो शब्द मन्मथभापितादिकमभिष्वङ्गहेतुमनुपतत्यनुसरतीत्येवशीलः शब्दानुपाती, एव नो रूपानुपाती, नो गन्धानुपातीति

१ प्रतिबन्ध प्र० ॥ २ पाधन्ना प्र० ॥

पदत्रयेणाप्येकमेव स्थानमित्यष्टममिति ८। 'नो सिलोगाणुवाई भवइ' नो श्लोकं ख्यातिमनुपतत्यनुसरतीत्येवंशीलः श्लोकानुपातीति नवममिति ९। 'नो सायसोक्खपडिबद्धे भवइ' सातात्पुण्यप्रकृतेः सकाशाद्यत्सौख्यं सुखं रसस्पर्शलक्षणविषयसम्पाद्यं तत्र प्रतिबद्धस्तत्परो मुनिः सातग्रहणादुपशमसौख्यप्रतिबद्धतायां न निषेधः भवति जायते इति दशममिति १०। क्वचित्तु ' चित्तसमाहिठ्ठाणत्ति' इति पाठस्तत्राप्ययमेवार्थो नवरं सत्यदशकं न व्याख्येयमिति ।

' दस चेव दसाओत्ति ' दशैव दशसंख्या एव दशाधिकाराभिधायकत्वाद्दशा इति बहुवचनान्तं स्त्रीलिङ्गं शास्त्रास्याभिधानमिति, ताश्चैताः—कर्म्मणोऽशुभस्य विपाकः फलं कर्म्मविपाकस्तत्प्रतिपादिका दशाध्ययनात्मकत्वाद्दशाः कर्म्मविपाकदशाः, विपाकश्रुताख्यस्यैकादशाङ्गस्य प्रथमश्रुतस्कन्धो द्वितीयश्रुतस्कन्धोप्यस्य दशाध्ययनात्मकः कर्म्मविपाकप्रतिपादकश्च, न चासाविहाभिमतः स्थानाङ्गेऽस्याविवृतत्वादिति ॥ १ ॥ तथा—साधूनुपासते सेवन्त इत्युपासकाः श्रावकास्तद्गतक्रियाकलापप्रतिबद्धा दशा दशाध्ययनोपलक्षिताः उपासकदशाः सप्तममङ्गमिति २। तथा—अन्तो विनाशः स च कर्मणस्तत्फलभूतस्य वा संसारस्य कृतो यैस्ते अन्तकृतास्ते च तीर्थकरादयः तेषां दशा अन्तकृतदशा इह चाष्टमाङ्गस्य प्रथमवर्गे दशाध्ययनानीति, तत्संख्ययोपलक्षितत्वादन्तकृतदशइत्यभिधानेनाष्टममङ्गमभिहितमिति ३। तथोत्तरः प्रधानो नास्योत्तरो विद्यत इत्यनुत्तरः उपपतनमुपपातो जन्मेत्यर्थः, अनुत्तरश्चासावुपपातश्चेत्यनुत्तरोपपातः सोऽस्ति येषां तेऽनुत्तरोपपातिकाः सर्वार्थसिद्धादिविमानपञ्चकोपपातिन इत्यर्थः, तद्वक्तव्यताप्रतिबद्धा दशा दशाध्ययनोपलक्षिता अनुत्तरौपपातिकदशा नवममङ्गमिति ४। तथा—आचरणमाचारो ज्ञानादिविषयः पञ्चधा आचारप्रतिपादनपरा दशा

दशाध्ययनात्मिका आचारदशाः दशाश्रुतस्कन्ध इति या रुढाः ५ । तथा प्रश्नाश्च पृच्छा व्याकरणानि च निर्वचनानि ,प्रश्नव्याकरणानि, तत्प्रतिपादिका दशा दशाध्ययनात्मिकाः प्रश्नव्याकरणदशाः दशममङ्गमिति ६ । तथा बन्धदशाः ७ द्विगृधिदशाः ८। दीर्घदशाः ९। सक्षेपिकदशाश्चाप्रतीता एता इति । तथा—

'समणधम्म चेत्ति' श्राम्यन्तीति श्रमणाः साधवस्तेषा धर्म्मः क्षान्त्यादिलक्षणः श्रमणधर्म्मस्तं च दशविधमुपसपन्न इत्यादि पूर्ववत्, स चाय—"खन्ती य मद्दवज्जवमुत्ती तवसजमे य बोधव्वे। सच्च सोय आकिञ्चण बभं च जइधम्मो" ॥१॥ तत्र क्षान्तिः—क्रोधविवेकः, मार्दव—मानपरित्यागेन वर्त्तन, आर्जव—मायापरित्यागः, मोचन—मुक्तिर्लोभपरित्यागः, तपो द्वादशविधमनशनादि, सयमश्चाश्रवविरतिलक्षण., सत्य मृषावादविरतिः, शौच सयम प्रति निरुपलेपता निरतिचारतेत्यर्थ , आकिञ्चन्य—कनकादिरहितता, ब्रह्म च ब्रह्मचर्यमिति । अन्ये त्वेवं श्रमणधर्म्मं पठन्ति—"खन्ती मुत्ती अज्जव मद्दव तह लाघवे तवे चेव । सञ्जमचियागकिञ्चण बोधव्वे बभचेरे य" ॥१॥ तत्र लाघवम् प्रतिबद्धता त्याग. सयतेभ्यो वस्त्रादिदान, शेष प्राग्वदिति । अथाशातनावर्जनतो महाव्रतरक्षणमाह—

आसायण च सव्व तिगुण एक्कारस विवज्जन्तो । उवसपन्नो जुत्तो रक्खामि मह्व्वए पञ्च ॥ २२ ॥

आय—ज्ञानादिलाभ शातयतीत्याशातना अर्हदादेरवज्ञेत्यर्थस्ता विवर्ज्जयन्निति योगः, किंविशिष्टा । सर्वां समस्तां सामान्येन, अथवा—' तिगुण एक्कारसन्ति ' च शब्दस्येह सम्बन्धात् त्रयो गुणा गुणकारका यस्य स त्रिगुणस्तमेकादश चैकादशाङ्क त्रयस्त्रिंशतमाशतना इत्यर्थः, एकादशाना त्रिगुणिताना त्रयस्त्रिंशत्सख्योपपत्तेरिति भावना, अथवा—वचनव्यत्ययात् प्रक्रान्ताशातनाशब्दसम्बन्धाच्च

त्रिगुणा एकादश वाशातनाः कर्म्मतापन्ना विवर्जयन् परिहरन्, तथोपसम्पन्नः प्रतिपन्नोऽनाशतनामिति सामर्थ्याद्गम्यते, तथा युक्तः श्रमणगुणैः रक्षामि, परिपालयामि महाव्रतानि पञ्चेति । आशतनाश्च त्रयस्त्रिंशदेताः अर्हत्सिद्धाचार्योपाध्यायसाधुसाध्वीश्रावकश्राविकादेवदेवी १०, इह ११, परलोक १२, केवलप्रणीतधर्म्म १३, सदेवमनुजासुरलोक १४, सर्व्वसत्त्व १५, काल १६, श्रुत १७, श्रुतदेवता १८, वाचनाचार्यविपया १९, आशातनाएकोन विंशतिः; सूत्रविपयास्तु चतुर्दश तद्यथा—

व्याविद्धाक्षर १, व्यत्याम्रेडित २, हीनाक्षरा ३, ऽत्यक्षर ४, पद ५, विनय ६, घोप ७, योगहीनाध्ययन ८, सुष्ठुदत्त ९, दुष्ठुप्रतीच्छितता १०, ऽकालस्वाध्ययकरण ११, कालास्वाध्यायकरणा १२, ऽस्वाध्यायिकस्वाध्यायित १३, स्वाध्यायिकास्वाध्यायित १४, लक्षणाः एतास्त्रयस्त्रिंशदाशातनाः । आसां च स्वरूपम्—अर्हतामाशातना न सन्ति तीर्थकरा, जानन्तो वा किमिति भोगान् भुञ्जते, देवादिविहितां समवसरणादिसपर्यां वा किमिति संयमिनोप्युपजीवन्तीत्यादिरूपा यदुक्तं—

"नत्थि अरहन्तत्ती जाणन्तो कीस भुञ्जए भोए । पाहुडियं तुत्र जीवई एव वयं उत्तरं इणमो॥ १ ॥ भोगप्फलनिव्वत्तियपुन्नप्पगडीणमुदयबाहल्ला । भुञ्जइ भोगे एवं पाहुडियाए इमं सुणसु ॥ २ ॥ तित्थयरनामगोयस्स खयट्ठा तहय चेव साभव्वा। धम्मं कहेइ अरहा पूयं चासेवए तं तु ॥ ३ ॥ खीणकसाओ अरहा कयकिच्चो अविय जीयमणुयत्ती । पडिसेवन्तो वि तहा अदोसवं होइ तं पूयं ॥ ४ ॥ १ सिद्धानां चाशातना न सन्ति सिद्धाः सद्भिरपि वा किं तैर्नि ष्ठैरित्यादिका, अत्र च समाधिः—"अत्थित्ति नियमसिद्धा सदाओ चेव गम्मई एवं । निचेट्ठावि भवन्ती वीरियखयओ न दोसो हु" ॥१॥ सकरणवीर्यक्षयादित्यर्थः २ । आचार्याणां

चाशातना यथा-"डहरो[1] अकुलीणोत्ति य दुम्मेहो दमग मन्दवयणोत्ति । अवियप्पलाभलद्धी सीसो परिभवइ आयरियं ॥१॥ अ-हवावि वए एव दिन्तुवएस परस्स जत्तेण । दसविहवेयावच्चे कायव्वे सय न कुव्वन्ति ॥ २ ॥" अत्रोत्तर-" डहरोवि नाणवुड्ढो अकुलीणोत्ति य गुणाऊओ रिहणु । दुम्मेहाई णेन भणति (त) सताइ दुम्मेहा ॥ ३ ॥ जाणति नविय एय निद्धमा मोक्खकारणं नाण । निच पगासयता वेयावच्चाइ कुव्वति ॥४॥ " सूत्रप्रदोपाध्यायाना चाशातना आचार्यवद् द्रष्टव्या इति ॥४॥ साधूना चाशा-तना यथा-"अमुणियसमयसहानो साहुसमुद्दिस्स भासए एव । अविसहणा तुरियगई भडणकाउ च तह चेव ॥ १ ॥ पाणसुणगा व भुञ्जन्ति एगओ तह विरूवनेवत्था । एमाइ भणयवन्न मूढो न मुणेइ एव तु ॥ २ ॥ अविसहणाइसमेया ससारसहावजाणणा नेव । साहू थेवकसाया जओव भुजन्ति तो तहवि ॥ २ ॥ " ॥५॥ साध्वीना चाशातना यथा-" कलहणिया बहु उवही अहवावि समणु वद्दवो समणी । गणियाण पुत्तभण्डा दुमवल्लि जलस्स सेवालो ॥ १ ॥ " अत्रोत्तर-"कलहन्ति नेव नाऊण कसाए कम्मनन्धवीएत्ति । सञ्जलणाणमुदयओ ईसिं कलहेवि को दोसो ॥ १ ॥ उवही य बहुविगप्पो वभव्वयरक्खणत्थमेयासिं । भणिओ जिणेहिं जम्हा तम्हा उवहिम्मि नो दोसो ॥ २ ॥ समणाण नेय एया उवद्दवो सम्मसारचित्ताण । सम्म जियमोहाण जिणवेयणसमाहिअप्पाणं ॥ ३ ॥ " ६ । तथा जिनशासनभक्ताः गृहस्था' श्रावका उच्यन्ते, तेषा चाशातना-

"लद्धूण य माणुस्स नाऊण य जिणमय न जे विरइ । पडिवज्जन्ति कह ते धन्ना वुचन्ति लोगमि ॥ १ ॥ सावगसत्तासाय-णमित्थुत्तरकम्मपरिणइवसओ । जइवि पवज्जन्ति न त तहावि धन्ना तिवग्गठिया ॥ २ ॥" एव श्राविकाशातनापि द्रष्टव्या ।७।

१ न सन्ति सिद्धारो० प्र० ।

तित्थस्सुन्नइकरा य ॥ १ ॥
देवानां चाशातनेयं–" कामपसत्ता विरईए वज्जिया अणिमिसा य निचेट्ठा । देवा सामत्थम्मिवि नय अणिमिस देवसहावा
एत्थ पसिद्धी मोहणियसायवेयणियकम्मउदयाउ । कामपसत्ता विरई कम्मोदयउ च्चिय न तेसिं ॥ २ ॥
निच्चेट्ठाणुत्तरा उ कयकिच्चा । कालणुभावा तित्थुन्नईपि अन्नत्थ कुव्वन्ति ॥ ३ " ।९। एवं देव्याशातनापि वाच्या १० । तथेह–लोको
मनुष्यस्य मनुष्यलोकस्तस्य त्वाशातना वितथप्ररूपणादिनेति ११ । तथा परलोको मनुष्यस्य नारकतिर्यगमरास्तस्याप्याशातना वित-
थप्ररूपणादिनैव १२ । केवलिप्रज्ञप्तो धर्म्मो द्विविधः श्रुतधर्मश्चारित्रधर्म्मश्च, तस्य त्वाशातना–"पागयभासनिवद्धं को जाणेइ पणीय
केणेयं । किं वा चरणेणं तु दाणेण विणा उ हवइत्ति " ॥१॥ अत्रोत्तरं " वालस्त्रीमूढमूर्खाणां नृणां चारित्रकांक्षिणाम् । अनुग्रहार्थं तत्वज्ञैः
सिद्धान्तः प्राकृतः स्मृतः" ॥१॥निपुणधर्म्मप्रतिपादकत्वाच्च सर्वज्ञप्रणी–तत्त्वमिति तथा–"दानमौरभ्रिकेणापि चाण्डालेनापि दीयते।
येन वा तेन वा शीलं न शक्यमभिरक्षिम् ॥ १ ॥ दानेन भोगानाप्नोति यत्र यत्रोपपद्यते । शीलेन भोगान् स्वर्गं च निर्वाणं चाधि-
गच्छति ॥ २ ॥ " किञ्चाभयदानदाता चारित्रवान्नियमत एवेति १३ । सदेवमनुष्यासुरस्य च लोकस्याशातना वितथप्ररूपणादिना
आह च—"देवाईयं लोयं विवरीयं भणइ सत्तदीवुदही । कयमहव पयावइणा पगईपुरिसाण जोगा वा " अत्रोत्तरं–"सत्तसु परि-
मियसत्ता मोक्खासुन्नत्तणं हवइ एवं । केण पयावइ विहिओ अन्नेणं एवमणवत्था ॥ १ ॥ चेयन्नसुन्नपगई पुरिसो किरियाइ वज्जिओ
इट्ठो । ता कह तेसि पवित्ती जीए होज्जा जगुप्पत्ती ॥ २ ॥"१४। सर्व सत्त्वानां त्वाशातना विपरीतप्ररूपणादिनैव मन्तव्या १५ ।
कालस्य त्वाशातना नास्त्येव कालः कालपरिणतिर्वा विश्वमिति तथाच–दुर्नयः–" कालः पचति भूतानि कालः संहरते प्रजाः । कालः
सुप्तेषु जागर्ति कालो हि दुरतिक्रमः" अत्रोत्तरं–कालोऽस्ति तमन्तरेण वकुलचम्पकादीनां नियतपुष्पादिप्रदानाभावप्रसङ्गात्, न च

तत्परिणतिर्विंश्च एकान्तनित्यस्य परिणामानुपपत्तेरिति १६, श्रुतस्य त्वाशातना "को आउरस्स कालो मइलवरधोवणे व को कालो। जइ मोक्खहेउ नाण को कालो तस्सकालो वा" ॥१॥ इत्यादिका इह चोत्तर "जोगोजोगो जिणसासणम्मि दुक्खक्खया पउजन्तो। अन्नोन्नमनाहाए असनत्तो होइ कायव्वो" ॥ १ ॥ पूर्व्वं धर्म्मद्वारेण श्रुतस्य आशातनोक्ता इह तु स्वतन्त्रश्रुतविषयेति न पौनरुक्त्य १७। श्रुतदेवतायास्त्वाशातना न विद्यते श्रुतदेवता अकिञ्चित्करी वा, अनोत्तर अस्त्येव श्रुतदेवता यतो नानधिष्ठितो मौनीन्द्र' खल्वागमो, न चाकिञ्चित्करी तामालम्व्य प्रशस्तमनसः सत्त्वस्य कर्म्मक्षयदर्शनात् १८, तथा वाचनाचार्यो य उपाध्यायसन्दिष्ट उद्देशादि करोति, तस्य चाशातनेय-निर्दु.खसुख' प्रभूतान् वारान् वन्दन दापयति, उत्तर तु-श्रुतोपचार एप क इव तस्यात्र दोप इति १९, इतो व्याविद्धाक्षरादिपदानि चतुर्दशापि श्रुतक्रियाकालगोचरत्वान्न पौनरुक्त्यभाञ्जीति। तत्र व्याविद्धाक्षर विपर्यस्ताक्षरम् २०, व्यत्याम्रेडित अन्योन्यासनद्धवर्णव्यामिश्र २१, हीनाक्षर अक्षरन्यूनम् २२, अत्यक्षरम् अधिकाक्षर २३, पदहीन पदेनैवोन २४, विनयहीन अकृतोचितविनय २५, घोपहीन उदात्तादिघोपरहित २६, योगहीन सम्यक्कृतयोगोपचारम् २७, सुष्ठु दत्त समधिक प्रदत्त गुरुणा २८, दुष्ठु प्रतीच्छित कलुपितान्तरात्मना शिष्येण गृहीतम् २९, अकाले कृतः स्वाध्यायः यो यस्य श्रुतस्य कालिकादेरकालस्तत्राधीतमिति, ३०, काले न कृत' स्वाध्यायो यस्यात्मीयोऽध्ययनकाल उक्तस्तत्र स्वाध्यायो न विहित इति ३१, अस्वाध्यायिके स्वाध्यायित अस्वाध्यायिक रुधिरमहिकापांसुपातगन्धर्व्वनगरमग्रामादिक तत्र स्वाध्यायितमधीतमिति ३२, स्वाध्यायिकेऽस्वाध्यायिकविपर्यलक्षणे न स्वाध्यायित नाधीतमिति ३३। अथवा-रत्नाधिकविषयास्त्रयस्त्रिंशदाशातना भवन्ति, तद्यथा—

पुरओ पक्खासन्ने गन्ता चेट्ठणनिसीयणायमणे १०। आलोयण ११ पडिसुणणे १२, पुव्वालवणे य १३ आलोए १४ ॥१॥

तह उवदंस १५ निमन्तण १६ खद्धा १७ ऽ। इयणे य १८ अप्पडिसुणणे य १९। खद्धत्ति य २० तत्थगए २१ किं२२ तुम २३ तज्जाय २४ नो सुमणे २५ ॥ २ ॥ नो सरसि २६ कहं छित्ता। २७ परिसं भेत्ता २८ अणुट्ठियाए कहे २९। संथारपायघट्टण ३० चिट्ठ ३१ च ३२। समासणे यावि ३३ ॥ ३ ॥ एतस्य गाथात्रयस्य व्याख्या—

पुरओत्ति सेहे रायणियस्स पुरओ गन्ता भवइ आसायणा सेहस्स। यतो मार्गोपदर्शनादिकं तथाविधकारणं विना रात्निकस्य पुरतो गन्तुं न वर्त्तते, अविनयदोसप्रसङ्गादिति; सेहे रायणियस्स (स) पक्खं गन्ता भवइ आसायणा सेहस्स। अविनयदोषप्रसङ्गादेव २ आसन्नेत्ति। सेहे रायणियस्स आसन्नं गन्ता भवइ आसायणा सेहस्स। कासितक्षुतादिषु श्लेष्मावयवलगनादिना अविनयसंभवादिति, एवमन्यत्रापि दोषा वाच्याः ३; एवं स्थानेनापि तिस्र आशातनाः। सेहे रायणियस्स पुरओ चिट्ठित्ता भवइ आसायणा सेहस्स ४, सेहे रायणियस्स सपक्खं चिट्ठित्ता भवइ आसायणा सेहस्स ५, सेहे रायणियस्स आसन्नं चिट्ठित्ता भवइ आसायणा सेहस्स ६, एवं निषीदनेनापि तिस्रः। सेहे रायणियस्स पुरओ निसीइत्ता भवइ आसायणा सेहस्स ७, सेहे रायणियस्स सपक्खं निसीइत्ता भवइ आसायणा सेहस्स ८, सेहे रायणियस्स आसन्नं निसीइत्ता भवइ आसायणा सेहस्स ९, आयमणत्ति। सेहे रायणिएण सद्धिं बहिं वा वियारभूमिं निक्खन्ते समाणे तत्थ सेहे पुव्वतरागं आयमइ पच्छा रायणिए आसायणा सेहस्स १०, आलोयणत्ति सेहे रायणिएण सद्धिं बहिया वियारभूमिं निक्खन्ते समाणे तत्थ सेहे पुव्वतरागं गमणागमणमालोएइ पच्छा रायणिए, आसायणा सेहस्स ११, अप्पडिसुणणेत्ति सेहे रायणियस्स राओ वा वियाले वा वाहरमाणस्स अज्जो के सुत्ते के जागरे, तत्थ सेहे जागरमाणे रायणियस्स अप्पडिसुणेत्ता भवइ आसायणा सेहस्स १२, पुव्वालवणेत्ति केइ रायणियस्स पुव्वसंलत्तए सिया तं सेहे पुव्वामेव आलवइ पच्छा रायणिए आसायणा

सेहस्स १३, आगेण यत्ति सेहे असणं वा, पाणं वा, खाइमं वा, साइमं वा, पडिगाहित्ता त पुव्वामेव सेहतरागस्स आलोएइ पच्छा रायणियस्स आलोएइ आसायणा सेहस्स १४, उवदमत्ति सेहे असणं ४ पडिगाहित्ता त पुव्वामेव सेहतरागस्स उवदंसेइ पच्छा रायणियस्स आसायणा सेहस्स १५, निमन्तणत्ति सेहे असण वा ४ पडिगाहित्ता त पुव्वामेव सेहतराग उवनिमन्तेइ पच्छा रायणिय आसायणा सेहस्स १६, गद्द त्ति सेहे रायणिएण सद्धिं असण वा ४ पडिगाहित्ता त रायणिय अणापुच्छित्ता जस्स २ इच्छइ तस्स २, प्रचुर २ दलयइ २ आसायणा सेहस्स १७, आइयणेत्ति सेहे असण वा ४ पडिगाहित्ता त रायणिएण सद्धिं भुञ्जमाणे तत्थ सेहे सरस २ डाग २ उसढ २ रसिय २ मणुन्न २ मणाम २ निद्ध २ लुक्ख २ आहारेत्ता भवइ आसायणा सेहस्स । इह च सरस २ ति रसाढ्यं स्वयं, डाग २ ति पत्रशाक कुन्ताकनिर्भेदिकादि कारणापेक्षमिदं, उसढ २ ति वर्णगन्धरसस्पर्शोपपेतं, रसियन्ति २ रसाल रसिय दाडिमाम्रादि इदमपि कारणापेक्षमेव, मणुन्न मणुन्न ति मनस इष्ट मनोज्ञं स्वभावतो मनोऽनुकूलमित्यर्थः, मणामन्ति मनसा अम्यते सुन्दरमिति ज्ञायते इति मनोम कुतोऽपि कारणवशान्मनसः प्रियमित्यर्थः, निद्ध २ ति स्नेहावगाढ, लुक्ख २ इति स्नेहवर्जितम् ग्लानमत्तस्यैतदपि प्रिय भवतीति १८, अप्पडिसुणणेत्ति सेहे रायणियस्स वाहरमाणस्स अपडिसुणेत्ता भवइ आसायणा सेहस्स इह च स्वर २ ति सामान्येन दिवसतोऽप्रतिश्रोता भवति १९, खद्धत्ति त्ति सेहे रायणिय खद्ध २ वत्ता भवइ आसायणा सेहस्स, इह च खद्ध २ ति खद्ध २ महता स्वरेण निट्ठुर भणइ २०, तत्थगएत्ति सेहे रायणियस्स वाहरमाणस्स तत्थगए सुणेइ तत्थगए चेव उल्लाव देइ आसायणा सेहस्स २१, किंति सेहे रायणिए आहुए किंति वत्ता भवइ आसायणा सेहस्स किन्ति किं भणसीत्यर्थः । भणियव्व च एव (१) मत्थएण वन्दामि २२, तुम ति सेहे रायणिय तुमतिवत्ता भवइ आसायणा सेहस्स को तुम चोइत्तए २३, तज्जायत्ति सेहे रायणियं

तज्जाएणं पडिहणित्ता भवइ आसायणा सेहस्स, तज्जाएणं ति कीस अज्जो गिलाणस्स न करेसि, भणइ कीस तुमं न करेसि. आयरिओ भणइ तुमं आलसियो, सो भणइ तुमं चेव आलसियो इत्यादि २४, नो सुमणेत्ति सेहे रायणियस्स कहं कहेमाणस्स नो सुमणसे भवइ आसायणा सेहस्स, इह च नो सुमणसे इति ओहयमणसङ्कप्पे अच्छइ, नाणुवूहइ कहं, अहो सोहणं कहियं ति २५, नो सरसित्ति सेहे रायणियस्स कहं कहेमाणस्स नो सुमरसित्ति वत्ता भवइ आसायणा सेहस्स, इह च नो सुमरसित्ति न सरसि तुमं एयं अत्थं न एस अत्थो एवं भवइ २६, कहं छेत्तत्ति सेहे रायणियस्स कहेमाणस्स तं कहं अच्छिन्दित्ता भवइ आसायणा सेहस्स, अच्छिन्दित्तत्ति भणइ अहं कहेमि २७, परिसं भत्तत्ति सेहे रायणियस्स परिसं भेत्ता भवइ आसायणा सेहस्स, इह च परिसं भत्तेत्ति एवं भणइ भिक्खावेलासमुद्दिसणवेलासुतत्थवेलाउ भिन्दइ २८, अणुट्ठियाए कहेत्ति सेहे रायणियस्स कहं कहेमाणस्स तीसे परिसाए अणुट्ठियाए अवोच्छिन्नाए अव्वोगडाए त्ति दोच्चंपि तच्चंपि तमेव कहं कहेत्ता भवइ आसायणा सेहस्स, इह च तीसे परिसाए अणुट्ठियाएत्ति निविट्ठाए चेव, अवोच्छिन्नाएत्ति जाहे कोवि अच्छइ, अव्वोगडाएत्ति अविसंसरिया एत्ति वुत्तं हवइ, दोच्चंपि तच्चंपित्ति बिहिं तिहिं चउहि वि, तमेवत्ति जो आयरिएण कहिओ अत्थो तमेवाधिकारं विकप्पेइ अयमपि प्रकारस्तस्यैवैकस्य सूत्रस्येति २९, सन्थारपायघट्टणत्ति सेहे रायणियस्स सेज्जासन्थारयं पाएणं सङ्घट्टेत्ता हत्थेण अणणुन्नवेत्ता गच्छइ आसायणा सेहस्स, इह शय्या सर्वाङ्गिकी संस्तारकोऽर्द्धतृतीयहस्तप्रमाणः, अथवा शय्यैव संस्तारकः शय्यासंस्तारकः, पादेन संघट्टयति नानुज्ञापयतिं न क्षमयतीत्युक्तं भवति । भणितं च "सङ्घट्टइत्ता काएणं तहा उवहिणामवि । खमेह अवराहं मे वएज्ज न पुणोत्ति य " ३०, चिट्ठत्ति सेहे रायणियस्स सेज्जासंथारयसि चिट्ठित्ता वा निसीइत्ता व तुयट्टित्ता वा भवइ आसायणा सेहस्स ३१, उच्चत्ति सेहे रायणियस्स उच्चासणे

चिट्ठित्ता वा, निसीइत्ता वा, तुयट्टित्ता वा भवइ आसायणा सेहस्स ३२, समासणे यावित्ति सेहे रायणियस्स समाणे आसणे चिट्ठित्ता वा निसीइत्ता वा तुयट्टित्ता वा भवति आसायणा सेहस्स ३३। इति दशाश्रुतस्कन्धसूत्रानुसारीगाथात्रयभावार्थः । एताः पुनस्त्रयस्त्रिंश द्‍व्याशातनाश्चतुर्षु (तसृषु) समवतरन्त्येतासु तद्यथा द्रव्याशातनाया क्षेत्राशातनाया कालाशातनाया भावाशातनाया च, तत्र द्रव्याशातना-रत्नाधिकेन सम भुञ्जानो मनोज्ञमात्मना भुक्ते एवमुपधिसंस्तारकादिष्वपि वाच्यम् १, क्षेत्राशातना-रत्नाधिकस्यासन्नगमनादिभ्यः २, कालाशातना-रात्रौ वा विकाले वा व्यवहारतः तूष्णीकस्तिष्ठति ३, भावाशातना-त्वाचार्यं त्वमिति वक्ति ४, एव त्रयस्त्रिंशदपि चतुर्षु द्रव्यादिषु समवतरन्तीति । एवमेकाद्यादिशुभाशुभस्थानाङ्गीकारवर्ज्जनद्वारेण कृता महाव्रतोच्चारणा, साम्प्रतमनुक्तस्थानातिदेशतस्ता कर्तुमाह—

एव तिदण्डविरओ तिगरणसुद्धो तिसल्लनीसल्लो । तिविहेण पडिक्कन्तो रक्खामि महव्वए पञ्च ॥ २३ ॥

एव प्रागुक्तलेश्यादिस्थानवत्त्रिदण्डविरतो दण्ड्यते चारित्रैश्वर्यापहारतो निःसारीक्रियते एभिरात्मेति दण्डास्त्रयश्च ते दुष्प्रयुक्त-मनोवाक्कायभेदाः त्रिसङ्ख्या दण्डास्तेभ्यो विरतो निवृत्तस्त्रिदण्डविरतः, उदाहरणानि चात्र मनोदण्डे कोङ्कणार्थः " सो किर एगया महावाए वायन्ते उद्धजाणू अहोसिरो चिन्ततो चिट्ठइ, साहूणो य अहो खन्तो सुहज्झाणोवगओत्ति वदन्ति, नय किंचि पडिवयण देइ, चिरेण सल्लाव देउमारद्धो साहूहिं पुच्छिओ, किम्मेचिर झाइयन्ति, सो भणइ, सपय खरतरो मारुओ वायइ, जइ ते मम पुत्ता इयाणि वल्लराणि क्षेत्राणीत्यर्थः पल्लीविज्जा तओ तेसिं वासारत्ते सरसाए भूमीए सुबहू सालिसम्पया होज्जा एय मए चिन्तय, तओ आयरिएहिं वारिओ, ठिओ एवमाइ जमसुह मणेण चिन्तेइ सो मणदण्डो १। वाग्दण्डोदाहरणमिद-"एगो साहू सन्नाभूमीओ आगओ अविहीए आलोएइ जहा असुगत्थ

वि कालेणं ति, एवमाइ दुप्पउत्तकायजोगो दण्डोत्ति" । कायदण्डोदाहरणं–
"चण्डरुद्दो आयरिओ, उज्जेणिं बाहिरगामाओ अणुजाणपेक्खओ यात्रादर्शनार्थमित्यर्थः आगओ, सो अईवरोसणो, तत्थ य समोसरणे ग-
णियाघरपरिभूओ जाइकुलाइसम्पन्नो इब्भदारओ समागत्ति, सो भणति, पव्वयामित्ति, तत्थ अण्णेहिं साहुहिं असद्दहन्तेहिं चण्डरुद्दस्स सगासे
पेसिओ "कलिणा कली घस्सउत्ति" तओ सो तस्स उवट्ठियो, तेण सो ताहे चेव लोयं काउं पव्वाविओ; पच्चूसे सयणभया गामं व-
च्चंताणं पुरओ सेहो, पिट्ठिओ चण्डरुद्दो, आवडिओ रुट्ठो, सेहं दण्डएण मत्थए आहणेइ, कहं ते पत्थरो न दिट्ठोत्ति, सेहो सम्मं सहइ,
आवस्सयवेलाए रुहिरावलित्तो दिट्ठो, चण्डदस्स तं पासिऊण मिच्छादुक्कडन्ति भणमणस्स वेरग्गमग्गगयस्स केवलनाणं समुप्पन्नं, सेहस्स
वि कालेणं ति, एवमाइ दुप्पउत्तकायजोगो दण्डोत्ति" तथा–'तिगरणसुद्धोत्ति' त्रीणि च तानि करणानि च मनः प्रभृतीनि
त्रिकरणानि तैः शुद्धो निर्दोषस्त्रिकरणानि वा शुद्धानि सर्वदोषरहितानि यस्य स त्रिकरणशुद्धः आह–त्रिदण्डविरतस्त्रिकरणशुद्धः
एव भवत्यतः किं तद्ग्रहणेन!, सत्यं, सावद्ययोगनिवृत्तस्त्रिदण्डविरत उच्यते, निरवद्ययोगप्रवृत्तस्तु त्रिकरणशुद्धः, अथवा–करणरूप-
सावद्ययोगविरतो दण्डत्रयविरत उच्यते, करणकारणानुमतिरूपसावद्ययोगविरतस्तु त्रिकरणशुद्ध इति न दोषः, अन्यथा वाऽ-
नयोर्बहुश्रुतैर्विशेषो भावनीयः यतो गम्भीरमिदमार्षमिति । तथा-'तिसल्लनीसल्लोत्ति' शल्यते बाध्यते प्राणी एभिरिति शल्यानि द्रव्य-
तस्तोमरादीनि भावतस्तु मायादीनि, निर्गतानि, शल्यानि यस्य स निःशल्यः, स चैकशल्यापेक्षयापि स्यादित्याह–त्रीणि च
तानि शल्यानि, च त्रिशल्यानि, तेषु विषये निःशल्यस्त्रिशल्यनिःशल्यः सन्, तत्र मायाशल्यं माया निकृतिः सैव शल्यं मा-
याशल्यं, नियाण नितरां दायते लूयते मोक्षफलमनिन्द्यब्रह्मचर्यादिसाध्यकुशलकर्म्मकल्पतरुवनमनेन देवर्ध्यादिप्रार्थनपरिणामनिशि-

सिनेति निदान तदेव शल्य निदानशल्य, मिथ्यादर्शनशल्य मिथ्या विपरीत दर्शन तत्त्वावबोधलक्षण मिथ्यादर्शन, तदेव शल्य मिथ्यादर्शनशल्यमिति । तिविहेण पडिक्कतोत्ति त्रिविधेन त्रिप्रकारेण करणेनेति गम्यते, प्रतिक्रान्तः सर्वातिचारप्रतिनिवृत्तो, रक्षामि महाव्रतानि पञ्चेति । अथ महाव्रतोच्चारण निगमयन्नाह—

इच्चेय महव्वयउच्चारण, थिरत्त सल्लुद्धरण धिइबलय ववसाओ साहणट्ठो पावनिवारण निकायणा भावविसोही पडागाहरण निज्जुहणाराहणा गुणाण सवरजोगो पसत्थज्झाणोवउत्तया जुत्तया य नाणे परमट्ठो उत्तमट्ठो एस तित्थकरेहिं रइरागदोसमहणेहिं देसिओ पवयणस्स सारो छज्जीवनिकाय सजम उवएसिय तेल्लोक्कसक्कय ठाण अब्भुयगया

इत्येतदनन्तरोक्त महाव्रतोच्चारण व्रतोत्कीर्त्तन कृतमिति शेषोऽत्र च को गुण इत्याह—'थिरत्तमित्यादि' अथवा—तत् कथभूतमित्याह—'थिरत्तन्ति' महाव्रतेष्वेव धर्मे वा स्थैर्यहेतुत्वात् स्थिरत्व—निश्चलत्व, भवति चासन्नसमाधेः सत्त्वविशेषस्य तत्करणश्रवणादिभ्यः सवेगातिशयान्महाव्रतेषु धर्म्मे वा निष्प्रकम्पतेति । शल्याना—मायाशल्यादीनामुद्धरकारणत्वाच्छल्योद्धरणमिदमिति । तथा—धृतश्चित्तसमाधेर्वलमवष्टम्भो धृतिबल तत्कारणत्वान्महाव्रतोच्चारणमपि धृतिबल स्वार्थिकप्रत्ययोपादानात् धृतिबलक, धीबल वा धृतिबल वा धीबल वा ददातीति धृतिबल दधीबलद वेत्युच्यते, जायते चासकृतद्वासितमतेर्धृतिबलमिति । एवमन्यत्रापि भावना कार्या, तद्यथा व्यवसायो दुष्करकरणाध्यवसायः, तथा-'साहणट्ठोत्ति' साध्यतेऽनेन साध्यमिति साधन साधकतमकरण तल्लक्षणोऽर्थः पदार्थः साधनार्थः मोक्षाख्यपरमपुरुषार्थनिष्पत्त्युपाय इत्यर्थः, तथा-पावनिवारणन्ति पापस्याशुभकर्म्मणो निवारण-निषेधक पापनिवारण, तथा निकायणतिनिकाच-

नेव निकाचना स्वव्रतप्रतिपत्तिदृढतरनिवन्ध इत्यर्थः, शुभकर्म्मणां वा निकाचनाहेतुत्वान्निकाचनेदमुच्यते, न च सरागसंयमिनामयमर्थो न घटत इति, तथा—भावविसोहित्ति, भावस्यात्मपरिणामस्य जलमिव वस्त्रस्य विशोधिकारणत्वाद्भावविशोधिर्भावनिर्म्मलत्वहेतुरित्यर्थः, तथा—'पडागाहरणन्ति' पताकायाश्चारित्राराधनावैजयन्त्या हरणं ग्रहणं पताकाहरणमिदं, लोके हि मल्लयुद्धादिपु वस्त्रमाभरणं द्रव्यं वा ध्वजाग्रे बध्यते, तत्र यो येन युद्धादिना गुणेन प्रकर्षवान् स रङ्गमध्ये पुरतो भूत्वा गृह्णातीति पताकां हरतीत्युच्यते, एवमत्रापि पाक्षिकादिषु महाव्रतोच्चारणतः समुपजातचारित्रविशुद्धिप्रकर्षः साधुः प्रवचनोक्तायाश्चारित्राराधनापताकाया हरणं करोतीति, तथा—निज्जूहणत्ति निज्जूहणा—निष्काशना कर्म्मशत्रूणामात्मनगरान्निर्वासनेत्यर्थः, तथाराधना अखण्डनिष्पादना केषामित्याह—गुणानां मुक्तिप्रसाधकजीवव्यापाराणां, तथा संवरयोग इति नूतनकर्म्मागमनिरोधहेतुः संवरस्तद्रूपो योगो व्यापारः संवरयोगः, अथवा—संवरेण पञ्चाश्रवनिरोधलक्षणेन योगः संबन्धः संवरयोग इति, तथा—'पसत्थझाणोवजुत्तयत्ति' प्रशस्तध्यानेन धर्मशुक्ललक्षणशुभाध्यवसानेनोपयुक्तता संपन्नता प्रशस्तध्याने वोपयुक्तता प्रशस्तध्यानोपयुक्तता, महाव्रतोच्चारणं कुर्व्वतः शृण्वतो वा नियमादन्यतरशुभध्यानसंभवादिति, तथा-'जुत्तयाय नाणेत्ति' युक्तता च समन्वितता च विभक्तिव्यत्ययात् ज्ञानेन तत्त्वावगमेन सद्बोधसंपन्नतेत्यर्थः, महाव्रतप्रतिपत्तेः सम्यग्ज्ञानफलत्वादितिभावः, चूर्णौ तु जुत्तया यत्ति पाठो व्याख्यातस्तत्र युक्तता चाष्टादशशीलाङ्गसहस्रैरिति द्रष्टव्यं, तथा—'परमट्ठोत्ति' परमार्थः सद्भुतार्थः अकृत्रिमपदार्थ इत्यर्थ इति, कश्चित्पदार्थः परमार्थोऽपि परमाण्वादिवदुत्तमो न भवत्यत आह—उत्तमश्चासावर्थश्चोत्तमार्थः-प्रकृष्टपदार्थः मोक्षफलप्रसाधकत्वेन महाव्रतानां सर्ववस्तुप्रधानत्वादितिभावः, तथा—एसत्ति, लिङ्गव्यत्ययादेतन्महाव्रतोच्चारणं प्रवचनस्य

१ ता—दत्तावधानता० प्र० ॥

सारो देशित इति सम्बन्ध , अथवा-एप इत्यनेन सार इत्येतस्य लिङ्ग गृहीतमिति कैरित्याह-तीर्थकरैः प्रवचनगुरुभि' किंविधैरित्याह-रतिश्चारित्रमोहनीयकर्म्मोदयजन्यस्तथाविधानन्दरूपश्चित्तविकार., रागश्च ममकारो, द्वेपश्चाहङ्कारो, रतिरागद्वेपास्तान्मथ्नन्ति-व्यपनयन्तीति रतिरागद्वेपमथनाः तैः, किमित्याह-देशितः केवलालोकेनोपलभ्य भव्येभ्य' प्रवेदितः, प्रवचनस्य द्वादशाङ्गार्थस्य सारो निष्पन्द , महाव्रतानि तीर्थकरै. प्रवचनार्थस्य सारभूतानि कथितानीत्यतो मुमुक्षुणा तेपु महानादरो विधेय इतिभावः, ते च भगवन्तस्तीर्थकराः पड्जीवनिकायसयम पट्सङ्ख्यपृथिव्यादिसत्त्वसमूहरक्षामुपलक्षणत्वान्मृपावादादिपरिहार चोपदिश्य भव्येभ्यः कथयित्वा उपलक्षणत्वात् स्वय कृत्वा च त्रैलोक्यसत्कृत लोकत्रयपूजित स्थान प्रदेश सिद्धिक्षेत्रमित्यर्थ , अभ्युपगता सम्प्राप्ता इत्यनेनापि महाव्रतानामत्यन्तोपादेयता सूचयतीति ।

अथ महाव्रतोत्कीर्त्तनापरिसमाप्तौ मङ्गलार्थं प्रत्यासन्नोपकारित्वाद्विशेपतो भगवतो महावीरस्य स्तुतिमाह—

**नमोत्थु ते सिद्ध बुद्ध मुत्त नीरय निस्सग माणमुरण गुणरयणसागर मणन्तमप्पमेय, नमोत्थु ते महइमहावीरवद्धमाणसामिस्स, नमोऽत्थुते अरहओ नमोत्थुते भगवओ तिकट्टु ।**

नमो नमस्कारोऽस्तु, भवतु कस्मै?,ते तुभ्य हे वर्द्धमानस्वामिन्निति प्रक्रमः, किंविशिष्ट?, सिद्ध कृतार्थ बुद्ध केवलज्ञानेनावगतसमस्तवस्तुतत्त्व मुक्त पूर्वबद्धकर्म्मबन्धनैस्त्यक्त नीरजः वध्यमानकर्म्मरहितः, अथवा नीरय निर्गतौत्सुक्य', नि.सङ्गः-पुत्रकलत्रमित्रधनधान्यहिरण्यसुवर्णादिसकलसम्बन्धविकलः, मानमूरण-सर्वगर्वोद्दलनः गुणरत्नसागर इति व्यक्तम् । तथा-अनन्तज्ञानात्मकत्वादनन्तस्त

स्यामन्त्रणं अनन्त मकारः प्राकृतशैलीप्रभवः, अप्रमेय प्राकृतज्ञानपरिच्छेद्य, अशरीर जीवस्वरूपस्य छद्मस्थैः परिच्छेत्तुमशक्यत्वादिति तथा नमो नमस्कारोऽस्तु भवतु, कस्मै ?, ते तुभ्यं किंविशिष्टेत्याह—महति गरियसि प्रक्रमात् मोक्षे कृतमते इति गम्यते । पुनरपि किंविशिष्टेत्याह-विशेषेणेरयति मोक्षं प्रति गच्छति गमयति वा प्राणिनः प्रेरयति वा कर्म्माणि निराकरोति, वीरयति वा रागादि शत्रून् प्रति पराक्रमत इति वीरः, निरुक्तितो वा वीरः यदाह—

"विदारयति यत्कर्म्म तपसा च विराजते । तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृतः" इतरवीरापेक्षया महांश्चासौ वीरश्चेति महावीरस्तस्यामन्त्रणं हे महावीर! पुनरपि किंविशिष्ट?, वर्द्धमान स्वकुलसमृद्धिहेतुतया पितृभ्यां कृतवर्द्धमानाभिधान! कुतस्ते नमस्कारोऽस्त्वित्याह-'सामिस्सत्ति' विभक्तिव्यत्ययादिति कृत्वेति प्रत्येकमभिसम्बधाच्च स्वामीति कृत्वा प्रभुरिति हेतोः, तथा नमो नमस्कारोऽस्तु ते इति कुत इत्याह-'अरहओत्ति' उक्तहेतुभ्यां अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हतीत्यर्हन् स इतिकृत्वा, नमोऽस्तु ते कुत इत्याह—'भगवतोऽत्ति' भगवानितिकृत्वा भगवानितिहेतोः तत्र भगः समग्रैश्वर्यादिलक्षणः । उक्तं च—" ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः । धर्म्मस्याथ प्रयत्नस्य षण्णां भग इतीङ्गना" ॥१॥स विद्यते यस्येति भगवानिति । अथवा—'महइ' महत्ति रूढिवशादतिमहान् स चासौ वीरश्चातिमहावीरः स चासौ वर्द्धमानश्चातिमहावीरवर्द्धमानः स चासौ स्वामी तस्मै, तथा नमोऽस्तु ते अर्हते, तथा—नमोऽस्तु ते भगवते इति कृत्वा इति हेतोः यतस्त्वमुक्तविशेषणोऽतस्ते नमोऽस्त्वितिभावः । अथवा—कथं नमोऽस्त्वित्याह—तिकट्टुत्ति त्रिकृत्वः त्रीन् वारानिति, प्रतिवाक्यं च नमस्क्रियाभिधानं स्तुतिप्रस्तावददुष्टमिति । यथा—महाव्रतोच्चारणं कर्म्मक्षयाय तथा श्रुतोत्कीर्त्तनमपि कर्म्मविलयायेति महाव्रतोत्कीर्त्तनं निगमयन् श्रुतोत्कीर्त्तनं कर्तुकाम इदमाह—

एसा खलु महव्वयउच्चारणा कया इच्छामो सुत्तकित्तण काउं ।

एपानन्तरोक्ता, खलुर्वाक्यालङ्कारमात्रे, महाव्रतोच्चारणा महाव्रतसशब्दना, कृतोक्तन्यायेन विहिता, साम्प्रत इच्छामोऽभिलपामः, श्रुतकीर्त्तना आगमग्रन्थाभिधानसशब्दाना, कर्तुं विधातुमिति । तत्पुनः श्रु समासतो द्विविध प्रज्ञप्त, तद्यथा–अङ्गप्रविष्ट अगबाह्य च, तत्र "पायदुग २ जङ्घो ४ रू ६ गायदुगद्ध तु दो य बाहू य १० । गीवा ११ सिर च १२ पुरिसो बारस अङ्गो सुयविसिट्ठो " जगानद्विकार्द्धं पृष्ठोदरलक्षण, एवविधश्रुतपुरुषस्याङ्गेषु प्रविष्ट व्यवस्थित अगप्रविष्ट तथाहि–प्रवचनपुरुषस्य पादयुगमाचारसूत्रकृते, जङ्घाद्विक स्थानसमवायावित्यादि । अथवा–"गणधरकयमङ्गगय ज कय थेरेहि बाहिर त तु । नियय व(अ)ङ्गपविट्ठ अणिययसुय बाहिर भणिय " श्रुतपुरुषाऽव्यतिरिक्तमङ्गबाह्य तदपि द्विविध प्रज्ञप्त आवश्यक च आवश्यकव्यतिरिक्त च, तत्र तावदल्पवक्तव्यत्वादावश्यकश्रुतसमुत्कीर्त्तनाय तदुपदेशकनमस्कारपूर्वक सूत्रमाह—

नमो तेसि खमासमणाण जेहिं इम वाइयं छव्विहमावस्सय भगवन्त ।

नमो नमस्कारोऽस्त्विति गम्यते, केभ्यः?, इत्याह–तेभ्यः क्षमाश्रमणेभ्यः–क्षमादिगुणप्रधानमहातपस्विभ्य स्वगुरुभ्यस्तीर्थकरगणधरादिभ्यो चेति भावः, यैरिद वक्ष्यमाण वाचित असभ्य प्रदत्तं, अथवा–वाचित परिभाषित सूत्रार्थतया विरचितमित्यर्थः । पड्विध पद्कारमवश्यकरणादावश्यक, गुणाना वाऽभिविधिना वश्यमात्मन करोतीत्यावश्यक, किंविशिष्ट–भगवन्तम् सातिशयाभिधेयसमृद्ध्यादिगुणयुक्त, पड्विधत्वमेवोपदर्शयन्नाह—

तं जहा–सामाइयं चउवीसत्थओ वंदणयं पडिक्कमणं काउस्सग्गो पच्चक्खाणं, सव्वेहिं पि एयंमि छव्विहे आवस्सए भगवंते ससुत्ते सअत्थे सगंथे सनिज्जुत्तिए ससंगहणिए जे गुणा वा भावा वा अरहन्तेहिं भगवन्तेहिं पन्नत्ता वा परूविया वा ते भावे सद्दहामो पत्तियामो रोएमो फासेमो पालेमो अणुपालेमो ।

तद्यथेत्युदाहरणोपदर्शनार्थः, सामायिकं–सावद्ययोगविरतिप्रधानोऽध्ययनविशेषः १, चतुर्विंशतिस्तवः–ऋषभादिजिनगुणोत्कीर्त्तनाधिकारवानध्ययनविशेषः २, वन्दनकं–गुणवत्प्रतिपत्तिप्रधानोऽध्ययनविशेष एव ३, प्रतिक्रमणं–स्खलितनिन्दाप्रतिपादकोऽध्यनविशेष एव ४, कायोत्सर्गो–धर्म्मकायातिचारव्रणशोधकोऽध्ययनविशेष एव ५, प्रत्याख्यानं विरतिगुणकारकोऽध्यनविशेष एव ६ सर्वस्मिन्नपि समस्तेऽप्येतस्मिन्ननन्तरोक्ते, षड्विधे षड्भेदे, आवश्यके भणितस्वरूपे, भगवति समग्रैश्वर्यादिमति; सह सूत्रेण मूलतन्त्ररूपेण वर्त्तत इतिससूत्रं तस्मिन्सहार्थेन तद्व्याख्यानरूपेण वर्त्तत इति सार्थं तस्मिन्, सह ग्रन्थेन सूत्रार्थोभयरूपेण वर्त्तत इति सग्रन्थं तस्मिन्, सह निर्युक्त्या प्रतीतरूपया वर्त्तत इति सनिर्युक्तिकं तस्मिन्, सह संग्रहण्या निर्युक्त्यैव बह्वर्थसंग्रहणरूपया वर्त्तत इति ससंग्रहणिकं तस्मिन्, केचन ये गुणा विरतिजनगुणोत्कीर्त्तनादयो धर्म्माः, वा शब्दउत्तरपदापेक्षया समुच्चये, भावाः क्षायोपशमिकादिपदार्थो जीवादिपदार्था वा, वाशब्दः पूर्वपदापेक्षया समुच्चय एव, अर्हद्भिर्देवादिकृतसपर्यार्हैर्भगवद्भिः समग्रैश्वर्यादिमद्भिः किमित्याह-प्रज्ञप्ताः सामान्येनोद्दिष्टाः, प्ररूपिता विशेषेण निर्दिष्टाः, वाशब्दौ पूर्ववत्, तान् भावानुपलक्षणत्वाद् गुणांश्च, 'सद्दहामोत्ति' श्रद्दध्महे सामान्येनैवमेवैतत् इतिश्रद्धाविषयीकुर्म्मः, 'पत्तियामोत्ति' प्रतिपद्यामहे प्रीतिकरणद्वारेण, 'रोएमोत्ति' अभिलापातिरेकेण रोचयामः आसेवनाभिमुखतया

रुचिविषयीकुर्म्म' इत्यर्थ , न च प्रीतिरुची न भिन्ने, यतः क्वचिद्व्याधौ प्रीतिसद्भावेऽपि न सर्वदा रुचिरतो विभिन्नताऽनयोरिति, 'फासेमोत्ति' स्पृशामः आसेवनाद्वारेण छुपामः, 'पालेमोत्ति' पाठोऽशुद्ध इव लक्ष्यः, 'अणुपालेमोत्ति' अनुपालयामः पौनःपुन्यकरणेन, यदि पुन' प्रसिद्धत्वात् 'पालेमोत्ति' पदमवश्य व्याख्येय तदा पालयामः पौनःपुन्यकरणेन, रक्षामः, एतच्च कतिपयदिनपालनेऽपि स्यादत अनुपालयाम', पालनादनु पश्चादाजन्मापीत्यर्थः पालयामोऽनुपालयामः । तथा–

ते भावे सद्दहन्तेहिं पत्तियन्तेहिं रोयन्तेहिं फासन्तेहिं पालन्तेहिं अणुपालन्तेहिं अन्तोपक्खस्स ज वाइय पढियं परियट्टिय पुच्छिय अणुपेहिय अणुपालिय त दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए ससारुत्तारणाए तिकट्टु उवसपज्जित्ताण विहरामि ।

तान् भावान् श्रद्धानैरेवमेवैतदितिसामान्येन प्रतीतिं कुर्वाणैः, प्रतिपद्यमानैर्विशेषप्रीतिकरणद्वारेण मन्यमानै', रोचयद्भिरभिलापातिरेकेण आसेवनाभिमुखतया रुचिविषयीकुर्वद्भिरित्यर्थ', स्पृशद्भिरासेवनाद्वारेण च्छुपद्भिः पालयद्भिरिति पदमत्रापि न विद्मः, तदङ्गीकारे च पूर्ववदर्थविशेषो वाच्यः, अनुपालयद्भिः पौन पुन्यकरणेन रक्षयद्भि , अन्तर्म्मध्ये पक्षस्य चन्द्राभिधानार्द्धमासस्य यत्किमपि, वाचित अन्येभ्य' प्रदत्त, पठित स्वयमधीत, परिवर्त्तित सूत्रतो गुणित, पृष्ट पूर्वाधीतस्य सूत्रादे' शङ्कितादौ प्रच्छनं विहितमित्यर्थः, अनुप्रेक्षितमर्थविस्मरणभयादिना चिन्तितं, अनुपालितं एभिरेव प्रकारैरनघमनुष्ठित तद्दुःखक्षयाय शारीरमानसासातोच्छेदाय, कर्म्मक्षयाय ज्ञानावरणाद्यष्टविनाशाय, मोक्षाय परमनिःश्रेयसाय, बोधिलाभाय प्रेत्यसद्धर्म्मावाप्तये, ससारोत्तारणाय भवभ्रमणपारगमनाय, अस्माकं भविष्यतीति गम्यते, इतिकृत्वा इतिहेतोरुपसपद्याङ्गीकृत्य, विहरामीति वचनव्यत्ययाद्विहरामो मासक-

दिना साधुविहारेण वर्त्तामहे इति । तथा—

अन्तोपक्खस्स जं न वाइयं, न पढियं, न परियट्टियं, न पुच्छियं, नाणुपेहियं; नाणुपालियं सन्ते बले सन्ते वीरिए सन्ते पुरिसकारपरक्कमे तस्स आलोएमो पडिक्कमामो निन्दामो गरहामो विउट्टेमो विसोहेमो अकरणयाए अब्भुट्टेमो अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जामो तस्स मिच्छामि दुक्कडं ।

अत्र नञ्विशेषितसूत्राणि पूर्ववद्व्याख्येयानि, कस्मिन् विद्यमानेपि वाचनादि न कृतमित्याह–सति विद्यमाने बले शारीरे प्राणे, तथा सति विद्यमाने वीर्ये जीवप्रभवे प्राणे एव, तथा सति पुरुषकारपराक्रमे तत्र पुरुषकारः पुरुषाभिमानः, स एव निष्पादितफलः पराक्रम इति, तस्स 'आलोएमोत्ति' विभक्तिव्यत्ययात्तदवाचितादिकमालोचयामो गुरवे निवेदयामः, तथा–'पडिकमामोत्ति'–प्रतिक्रामामः प्रतिक्रमणं कुर्म्मः, तथा–'निन्दामोत्ति' निन्दामः स्वसमक्षं जुगुप्सामहे, आह च–"सचरित्तपच्छयावो निन्दत्ति"–तथा–'गरहामोत्ति' गर्हामो गुरुसमक्षं जुगुप्सामहे आह च–"गरहावि तहाजाइयमेव नवरं परप्पयासणयत्ति" तथा–'विउट्टेमोत्ति' व्यतिवर्त्तयामो वित्रोटयामो विकुट्टयामो वा अवचनाद्यनुबन्धं व्यवच्छेदयाम इत्यर्थः, 'विसोहेमोत्ति' विशोधयामः प्रकृतदोषपङ्कमलिनमात्मानं विमलीकुर्म्मः, तथा–अकरणतया पुनर्न करिष्याम इत्येवमभ्युत्तिष्ठामोऽभ्युपगच्छामं इति, यथार्हमपराधाद्यपेक्षयायथोचितं, तपःकर्म्म निर्विकृतिकादिकं, पापच्छेदकत्वात्पापच्छित् प्रायश्चित्तविशोधकत्वाद्वा प्रायश्चित्तं, प्रतिपद्यामहे अभ्युपगच्छामः, तथा तस्य यत्र वाचितमित्यादेरपराधस्य मिथ्यादुष्कृतं स्वदोषप्रतिपत्तिगर्भं पश्चात्तापानुसूचकं मिथ्यादुष्कृतमिति वाक्यं प्रयच्छाम इति ।

१. भन्नए तेण । पापण वावि त्रित्तं विसोहए तेण पच्छित्तं । तपः कर्मनिर्विकृतिकादिकं० । प्र०

समुत्कीर्त्तितमावश्यकमिदानीं तद् व्यतिरिक्तस्यावसरस्तदपि द्विविध प्रज्ञप्त, तद्यथा-कालिक चोत्कलित च, यदिह दिवसनिशाप्रथमपश्चिमपौरुषीद्वय एवास्वाध्यायिकाभावे पठ्यते तत्कालेन निर्वृत्त कालिक, यत्पुनः कालवेलापञ्चविधास्वाध्यायिकवर्ज्यं पठ्यते तदुत्कालिक । तत्र तावदुत्कालिकमुत्कीर्त्तनायाह-

नमो तेसिं खमासमणाण जेहिं इम वाइय अङ्गबाहिरं उक्कालिय भगवन्त त जहा-दसवेयालिय, कप्पियाकप्पिय चुल्लकप्पसुय, महाकप्पसुय, ओवाइय, रायप्पसेणइय, जीवाभिगमो, पन्नवणा, महापन्नवणा, नन्दी, अणुओगदाराइ, देविन्दत्थओ, तन्दुलवेयालिय, चन्दाविज्झय, पमायप्पमायं, पोरिसिमण्डल, मण्डलप्पवेसो, गणिविज्जा, विज्जाचरणविणिच्छओ, झाणविभत्ती, मरणविभत्ती, आयविसोहि, सलेहणासुयं, वीयरागसुयं विहारकप्पो, चरणविही आउरपच्चक्खाण महापच्चक्खाण ॥

नमो नमस्कारोऽस्त्विति गम्यते तेभ्यः क्षमाश्रमणेभ्यः सूत्रार्थदातृभ्य इत्यर्थः, यैरिदं वक्ष्यमाण, वाचितमस्मभ्य प्रदत्तमङ्गबाह्य प्रवचनपुरुषाङ्गेभ्यो बहिर्भव, उत्कालेन निर्वृत्तमुत्कालिक, भगवत् महार्थत्वसमृद्ध्यादिगुणवत्, तद्यथा-"दसवेयालियन्ति" विकालेनापराह्णलक्षणेन निर्वृत्त वैकालिक, दशाध्ययननिर्माणं च तद्वैकालिकं, च मध्यपदलोपात् दशवैकालिक, वृद्धसम्प्रदायश्चात्र—

"वद्धमाणसामिणो चरमतित्थयरस्स सीसो तित्थसामी सुधम्मो नाम अणगारो आसि । तस्सवि य जबुनामो । तस्सवि य पभवो । तस्सन्नया कयाई पुव्वरत्तावरत्तसमयमि चिन्ता समुप्पन्ना । को मे गणहरो होज्जत्ति । ताहे अप्पणो गणे समणसङ्घे य सव्वओ

१ चोत्कालिकअधिक प्र० ।

उवओगो कओ। न दीसइ कोइ अव्वोच्छित्तिकरो। ताहे गारत्थेसु उवउत्तो। उवओगे कए रायगिहे नगरे सेज्जंभवं बंभणं जन्नं जयमाणं पासइ। ताहे रायगिहं नगरमागन्तूण सङ्घाडयं वावारेइ। जन्नवाडं गन्तुं भिक्खट्ठा धम्मलाभेह। तत्थ तुज्झे पडिसेहिज्जिहिह। ताहे तुज्झे भणिज्जह। "अहो कष्टं तत्त्वं न ज्ञायते इति" ते य साहुणो तत्थ गया जाव पडिसेहिया। तओ तेहिं भणियं "अहो कष्टं तत्त्वं न ज्ञायते इति" तेण य सेज्जं भवेणं दारमूले ठिएण तं वयणं सुयं। ताहे सो विचिन्तेइ। एए उवसन्ता तवस्सिणो असन्तं न वयन्तित्ति काउं अज्झावगसगासं गन्तुं भणइ 'किं तत्तान्ति'। सो भणइ वेदास्तत्वं। ताहे सो असिं कड्ढिऊण भणइ। सीसं ते छिन्दामि जइ मे तुमं तत्तं न कहेसि। तओ अज्झावओ भणइ 'पुन्नो मे समओ'। भणियमेयं वेयत्थे 'शिरश्छेदे तत्त्वं कथनीयमिति'। तो संपयं कहयामि जं एत्थ तत्तं। एयस्स जूयस्स हिट्ठा सव्वरयणामई अरहओ पडिमा, सा वुच्चइ, तो अरहओ धम्मो तत्तन्ति। तओ सिज्जंभवो जिणपडिमादंसणेण पडिबुद्धो। उवयारित्ति अज्झावगस्स पाएसु पडिऊण जन्नवाडोवक्खरं च दाउणं निग्गओ। साहुणो गवेसमाणो गओ य आयरियसगासं। आयरियं साहुणो य वन्दित्ता भणइ 'मम धम्मं कहेह'। ताहे आयरिया उवउत्ता जहा इमो सोत्ति। ताहे आयरिएहिं साहुधम्मो कहिओ। तं सोउं सो पव्वईओ चोद्दसपुव्वी जाओ। जया य सो पव्वइओ तदा तस्स गुव्विणी महिला होत्था। तम्मि पव्वइए लोगो नियल्लओ तं ववस्सइ। जहा तरुणाए भत्ता पव्वइओ अपुत्ता य एसत्ति। तहा अवि यत्थि तव किंचि पोट्टेत्ति पुच्छइ। सा भणइ। उवलक्खेमि मणागं। तओ समएण दारओ जाओ। तओ निव्वत्तवारसाहस्स निययल्लगा जम्हा पुच्छिज्जन्तीए मायाए से भणियं मणागन्ति, तम्हा मणगो से नामं कारेति। जया य सो अट्ठवरिसो जाओ तया मायरं पुच्छइ। को मम पिया। सा भणइ। तव पिया पव्वइओ। ताहे सो नस्सिउं पियुसगासे पट्ठिओ। आयरिया य तक्कालं चम्पाए

विहरन्ति । सोवि दोरओ उवलद्धवुत्तन्तो चपाए आगओ । आयरिएण सन्नाभूमिं गएण सो दारओ दिट्ठो । दारएण वन्दिओ आयरिओ । आयरियस्स त दारय पेच्छन्तस्स नेहो जाओ । तस्सेव दारगस्स तहेव । तओ आयरिएण पुच्छिओ, भो दारगा!, कुओ आगमणन्ति । तेण भणिय रायगिहाओ । आयरिएण भणिय । तत्थ तुम कस्स पुत्तो नत्तुओ वा । सो भणइ । सेज्जभवो नाम बभणो तस्साह पुत्तो । सो किर पव्वईओ । सूरिहिं भणिय । केण कज्जेण तुम आगओसि । सो भणइ । अहपि पव्वइस्स । तो भगव जाणेह तुब्भे तं, तो आयरिया भणन्ति जाणामो । तेण भणिय सो कहिन्ति। सूरिणा भणिय सो मम मित्तो एगसरीरभूओ, पव्वयाहि तुम मम सगासे । तेण भणिय एव करेमि । तओ तत्थेव त पव्वावेत्ता आयरिया आगन्तु पडिस्सए आलोएन्ति सच्चित्तो पडिमुक्को सो पव्वइओ। पच्छा आयरिया उवउत्ता । केवइय काल एस जीवइत्ति, नाय जाव छम्मासा । ताहे आयरियाण वुद्धी समुप्पन्ना । इमस्स थोवग आउं । किं कायव्वन्ति? चोद्दसपुव्वी कम्हि कारणे समुप्पन्ने निज्जूहइ । अपच्छिमो पुण चोद्दसपुव्वी अवस्समेव निज्जूहइ । ममवि इम कारण समुप्पन्न । ता अहमवि निज्जूहामि । ताहे आढत्तो निज्जूहिउ । जाव थोवावसेसे दिवसे दस अज्झयणा निज्जूढा । तेणेद दसवेयालिय भणिज्जइ । इम च मणगेण छहिं मासेहिं पढिय । तओ समाहीए काल गओत्ति । यथा–

चानेनैतावता श्रुतेनाराधितमेवमन्येऽप्येतदध्ययनानुष्ठानतः आराधका भवन्तीति वृद्धाः । तस्मिंश्च कालगते अहो आराधितमनेनेत्यानन्दाश्रुपात शय्यम्भवस्थविरा अकार्षुः । ततो यशोभद्रेण, शय्यम्भवप्रधानशिष्येण गुर्वश्रुपातदर्शनात् किमेतदाश्चर्यमिति विस्मितेन भगवन् किमेतदकृतपूर्वं क्रियते इति पृच्छा कृता । ततः शय्यम्भवेन भगवता समारस्नेह ईदृशः, सुतोऽय मम, बलवानपत्यस्नेहोऽत्रापराध्यतीति कथित । ततो यशोभद्रादयो "गुराविव गुरुपुत्रके वार्त्तितव्यमिति विद्वत्प्रवादो" न चायमस्माभिः कृत इत्यनुताप

चकृस्ततो गुरुणा प्रतिबन्धदोषपरिहारार्थं न मया कथितं, नात्र भवतां दोष इति वदता परिसंस्थापितास्ते । ततः शय्यम्भवेनाल्पा-
युषमेनमवेत्य मयेदं शास्त्रं निर्व्यूढं, किमत्र युक्तमिति सङ्घाय निवेदिते विचारणा कृता यदुत—कालह्रासदोषात् प्रभूतसत्त्वानामि-
दमेवोपकारकमतस्तिष्ठत्वेतदिति नोपसंहृतं प्रवचनगुरुणेति ” । तथा—

" कप्पियाकप्पियन्ति "—कल्प्याकल्प्यप्रतिपादकं कल्प्याकल्प्यं तथा—" चुल्लकप्पसुयं महाकप्पसुयन्ति" कल्पनं कल्पः स्थ-
विरकल्पादिस्तत्प्रतिपादकं श्रुतं कल्पश्रुतं तत्पुनर्द्विभेदमेकमल्पग्रन्थमल्पार्थं च, द्वितीयं महाग्रन्थं महार्थं च ॥ तथा—"ओवाइयन्ति"
प्राकृतत्वात् वर्णलोपे औपपातिकं उपपतनमुपपातो देवनारकजन्म सिद्धिगमनं च, तमधिकृत्य कृतमध्ययनमौपपातिकमिदं चोपाङ्ग
वर्त्तते, । आचाराङ्गस्य हि प्रथममध्ययनं शस्त्रपरिज्ञा, तस्याद्योद्देशके सूत्रमिदं "एवमेगेसिं नो नायं भवइ, अत्थि वा मे आया उववा-
इए, नत्थि वा मे आया उववाइए । के वा अहं आसी, के वा इहच्चुए पिच्चा भविस्सामीत्यादि " इह च सूत्रे यदौपपातिकत्वमात्म-
नो निर्दिष्टं तदिह प्रपंच्यत इत्यर्थतोऽङ्गस्य समीपभावेनेदमुपाङ्गमिति । "रायप्पसेणइयन्ति" राज्ञः प्रदेशिनाम्नः प्रश्नानि राजप्रश्नानि-
तान्युपलक्षणभूतान्यधिकृत्य प्रणीतमध्ययनं राजप्रश्नीयमिदमप्युपाङ्गं सूत्रकृताङ्गस्येति । तथा—"जीवाभिगमोत्ति" जीवानामुपलक्षत्वा
दजीवानां चाभिगमो ज्ञानं यत्र स जीवाभिगमो ग्रन्थः, सोऽपि स्थानाङ्गस्योपाङ्गमिति । तथा 'पण्णवणत्ति' जीवादीनां प्रज्ञापनं—
प्रज्ञापना, बृहत्तरा महाप्रज्ञापना; । एते च समवायाङ्गस्योपाङ्गे इति । तथा—

"नन्दित्ति" नन्दनं नन्दी, नन्दन्त्यनयेति वा भव्यप्राणिन इति नन्दी, पञ्चप्रकारज्ञानस्वरूपप्रतिपादकोऽध्ययनविशेष इति ।
तथा—"अणुओगदाराइन्ति" अनुयोगो व्याख्यानं तस्य द्वाराण्युपक्रमादीनि चत्वारि मुखान्यनुयोगद्वाराणि तत्स्वरूपप्रतिपादकोऽ-

ध्ययननिशेषोऽभेदोपचारादनुयोगद्वाराणीत्युच्यते। तथा—

" देविन्दत्थओत्ति" देवेन्द्राणा चमरवैरोचनादीना स्तवन भवनस्थित्यादिस्वरूपादिवर्णन यत्रासौ देवेन्द्रस्तव इति । तथा—
" तन्दुलवेयालियन्ति " तन्दुलाना वर्षशतायुष्कपुरुषप्रतिदिनभोग्याना सख्याविचारेणोपलक्षितो ग्रन्थविशेषः तन्दुलवैचारिकमिति।
तथा-"चदाविज्झयन्ति"-इह चन्द्रो यन्त्रपुत्रिकाक्षिगोलको गृह्यते, तथा मर्यादया विध्यत इति आवेध्य, तदेवावेध्यक, चन्द्रलक्षणामावेध्यक चन्द्रावेध्यक राधावेध इत्यर्थः, तदुपमानमरणाराधनाप्रतिपादको ग्रन्थविशेषश्चन्द्रावेध्यकमिति। तथा—

"सूरपण्णत्तित्ति" क्वचित् पाठस्तदर्थमुपरि वक्ष्यामः। तथा "पमायप्पमायन्ति" प्रमादाप्रमादस्वरूपभेदफलविपाकप्रतिपादकमध्ययन प्रमादाप्रमाद, तत्र प्रमादस्वरूप महाकर्म्मेन्धनप्रभवाविध्यातदुःखानलज्वालाकलापपरीतमशेषमेव ससारवासगृह पश्यंस्तन्मध्यवर्त्यपि सति तन्निर्गमनोपाये वीतरागप्रणीतधर्म्मचिन्तामणौ यतो विचित्रकर्म्मोदयसाचिव्यजनितात्परिणामविशेषादपश्यन्निव तद्भयमविगणय्य विशिष्टपरलोकक्रियाविमुख एवास्ते सत्त्वः स खलु प्रमाद इति। भेदा मद्यादयस्तत्कारणत्वादुक्त च "मज्ज विसय कसाया निद्दा विगहा य पञ्चमी भणिया। एए पञ्च पमाया जीव पाडन्ति ससारे"। फलविपाको दारुण' उक्त च—

"श्रेयो विषमुपभोक्तु क्षम भवेत्क्रीडितु हुताशेन। ससारबन्धनगतैर्नतु प्रमाद' क्षमः कर्त्तुम्। १। अस्यामेव हि जातौ नरमुपहन्याद्विष हुताशो वा। आसेवितः प्रमादो हन्याज्जन्मान्तरशतानि। २। यत्र प्रयान्ति पुरुषाः स्वर्गं यच्च प्रयान्ति विनिपातम्। अत्र निमित्तमनार्यः प्रमाद इति निश्चितमिद मे। ३। ससारबन्धनगतो जातिजराव्याधिमरणदु'खार्त्तः। यन्नोद्विजते सत्त्वः सोऽप्यपराधः प्रमादस्य। ४। आज्ञाप्यते यदवशस्तुल्योदरपाणिपादवदनेन। कर्म्म च करोति बहुविधमेतदपि फलं प्रमादस्य।५। इह हि

प्रमत्तमनसः सोन्मादवदनिभृतेन्द्रियाश्चपलाः । यदकृत्यं तत्कृत्वा सततकार्येष्वभिपतन्ति । ६ । तेषामभिपतितानामुद्भ्रान्तानां प्रमत्तचित्तानाम् । वर्द्धन्त एव दोषा वनतरव इवाम्बुसेकेन । ७ । दृष्ट्वाप्यालोकं नैव विश्रंभितव्यं तीरं नीतापि भ्राम्यन्ते वायुना नौ । लब्धवैराग्यं भ्रष्टयोगः प्रमादाच्चित्रं व्यावृतो ब्रह्मदत्तो नरेशश्च इत्यादि । ८ ।

एवं प्रतिपक्षद्वारेणाप्रमादस्वरूपादयो वाच्या इती। तथा "पोरिसिमंडलन्ति" पुरुषः शंकुः शरीरं वा तस्मान्निष्पन्ना पौरुषी, इयमत्र भावना-यदा सर्व्वस्य वस्तुनः स्वप्रमाणा छाया जायते तदा पौरुषी, इत्येतच्च पौरुषीमानं उत्तरायणान्ते दक्षिणायनादौ वैकं दिनं भवति, तत ऊर्ध्वमंगुलस्याष्टावेकषष्टिभागा दक्षिणायने वर्द्धन्ते उत्तरायणे च ह्रसन्तीती। एवं पौरुषी मण्डले २ अन्या २ प्रतिपाद्यते तदध्ययनं पौरुषीमण्डलमिति । तथा-"मण्डलप्रवेश" इति यत्रेह चन्द्रसूर्ययोर्दक्षिणोत्तरेषु मण्डलप्रवेशो वर्ण्यते तदध्ययनं मण्डलप्रवेश इति । तथा "गणिविज्जत्ति" गुणगणोऽस्यास्तीति गणी स चाचार्यस्तस्य विद्या ज्ञानं गणिविद्या, तत्राविशेषेऽप्ययं विशेषः-"जोइस-निमित्तनाणं गणिणो पव्वावणाइकज्जेसु । उवउज्जइ तिहिकरणादिजाणणट्ठं ऽण्णहा दोसो" । तथा-विज्जाचरणविणिच्छओत्ति" विद्येति ज्ञानं तच्च दर्शनसहचरितमन्यथा ज्ञानाभावात्, चरणं चारित्रं एतेषां फलविनिश्चयप्रतिपादको ग्रन्थः विद्याचरणविनिश्चय इति । तथा-"झाणविभत्तित्ति" ध्यानान्यार्त्तध्यानादीनि तेषां विभजनं यस्यां ग्रन्थपद्धतौ सा ध्यानविभक्तिः । तथा "मरणविभत्तित्ति" मरणानि प्राणत्यागलक्षणानि अनुसमयादीनि वर्त्तन्ते यथोक्तं "आवीइ १, ओहि २, अन्तिय ३, वलायमरणं ४, वसट्टमरणं च ५ । अन्तोसल्लं ६, तब्भव ७, वालं ८, तह पण्डियं ९; मीसं १० ॥ १ ॥ छउमत्थमरण ११ केवलि १२ वेहाणस १३ गिद्धपट्ठमरणं

१ मण्डलेषुमण्डलान्० प्र०।

च १४ । मरण भत्तपरिण्णा १५, इङ्गिणि १६, पाओवगमण च १७ । २। तत्रावीचिमरण आ समन्ताद्वीच्य इव वीचयः प्रतिसमयमनुभूयमानायुषोऽपराऽपरायुर्दलिकोदयात् पूर्वपूर्वायुर्दलिकविच्युतिलक्षणावस्था यस्मिन् तदावीचिमरण । अथवा–वीचिर्विच्छेदस्तदभावादवीचिस्तल्लक्षण मरणमवीचिमरण ॥१॥ 'अहोत्ति' अवधिमरण अवधिर्म्मर्यादा, ततश्च या निनारकादिभवनिबन्धनतयायु'कर्म्मदलिकान्यनुभूय म्रियते, यदि पुन. तान्येवानुभूय मरिष्यति तदा तदवधिमरण, सभवति हि गृहीतोज्झितानामपि कर्म्मदलिकाना पुनर्ग्रहण परिणामवैचित्र्यादिति॥ २॥"अन्तियत्ति" आत्यन्तिकमरण यानि नारकाद्यायुष्कतया कर्मदलिकान्यनुभूय म्रियते, मृतो वा न पुनस्तान्यनुभूय मरिष्यतीति ॥ ३ ॥ वलवन्मरणवशार्त्तमरणस्वरूप यथा—

"सञ्जमजोगविसन्ना मरन्ति जे त वलायमरण तु ॥ ४ ॥ इन्दियविसयवसगया मरन्ति जे त वसट्ट तु ॥५॥ " अन्त'शल्यमरणस्वरूप यथा–"लज्जाए गारवेण य बहुसुयमएण वावि दुच्चरियं । जे न कहन्ति गुरूण न हु ते आराहगा होन्ति ॥ १ ॥ " गारवपङ्कनिबुड्डा अइयार जे परस्स न कहिन्ति । दसणनाणचरित्ते ससल्लमरण हवइ तेसिं ॥ २ ॥ एय ससल्लमरण मरिऊण महाभए दुरन्तम्मि । सुचिर भमन्ति जीवा दीहे ससारकान्तारे॥ ६ ॥ ३॥ तद्भवमरणस्वरूपमिद "मोत्तु अकम्मभूमगनरतिरिए सुरगणे य णेरइए। सेसाण जीवाण तब्भवमरण तु केसिञ्चि ॥ ७ ॥ " तस्मिन्नेव भवे उत्पद्यमानानामिति भावना । अथ वालादिमरणसप्तकस्वरूप यथा–" अविरयमरण वाल ।८।९। मरण विरयाण पण्डिय वेन्ति । जाणाहि वालपण्डियमरणं पुण देसविरयाण ॥१०॥ १ ॥ मणपज्जवोहिनाणी सुयमच्णाणी मरन्ति जे समणा । छउमत्थमरणमेय ॥ ११ ॥ केवलिमरण तु केवलिणो ॥ १२ ॥ २ ॥ गिद्धादिभक्खणं गिद्धपट्ठ । १३ । उब्बन्धणाइ वेहास ॥ १४ ॥ एए दुन्नि वि मरणा कारणजाए अणुन्नाया । ३ । " तथा–"भत्तपरिण्णत्ति" चतुर्विधा-

हारस्य त्रिविधाहारस्य वा यावज्जीवमपि परित्यागात्मकं प्रत्याख्यानं भक्तपरिज्ञोच्यते ॥ १५ ॥ तथा इङ्ग्यते प्रतिनियतप्रदेश एव चेष्ट्यतेऽस्यामनशनक्रियायामितीङ्गिनी ॥ १६ ॥ तथा–पादैरधःप्रसर्प्पिमूलात्मकैः पिबति पादपो वृक्ष उपशब्दश्चोपमेतिवत् सादृश्येपि दृश्यते, ततश्च पादपमुपगच्छति सादृश्येन प्राप्नोतीति पादपोपगमनम् । किमुक्तं भवति–यथैव पादपः क्वचित्कथंचिन्निपतितो निश्चलमेवास्ते तथायामपि भगवान् यद्यथा समविषमदेशेष्वङ्गमुपाङ्गं वा प्रथमतः पतितं न तत्तच्चलयतीति ॥ १७ ॥ एतेषां मरणानां विभक्तिर्विभजनं विचारणं यस्यां ग्रन्थपद्धतौ क्रियते सा मरणविभक्तिरिति । तथा–“आयविसोहित्ति” आत्मनो जीवस्यालोचनादिप्रायश्चित्तप्रतिपत्त्यादिप्रकारेण विशुद्धिः कर्म्मविगमलक्षणा प्रतिपाद्यते यत्र तदध्ययनमात्मविशुद्धिः । तथा–“संलेहणासुयन्ति” द्रव्यभावसंलेखना प्रतिपाद्यते यत्र तदध्ययनं संलेखनाश्रुतम् । तत्र द्रव्यसंलेखनोत्सर्गतः “चत्तारि विचित्ताइं विगईनिज्जुहियाइ चत्तारि” इत्यादिका । भावसंलेखना तु क्रोधादिकषायप्रतिपक्षाभ्यास इति । “वीयरायसुयंति” सरागव्यपोहेन वीतरागस्वरूपं प्रतिपाद्यते यत्राध्ययने तद्वीतरागश्रुतम् । तथा–“विहारकप्पोत्ति” विहरणं विहारो वर्त्तनं तस्य कल्पो व्यवस्था स्थविरकल्पादीनामुच्यते, यत्र ग्रन्थेऽसौ विहारकल्पः । तथा–“चरणविहित्ति” चरणं व्रतादि यथोक्तं–“वयसमणधम्मसञ्जमवेयावच्चं च बम्भगुत्तीओ । नाणाइ तियं तवकोहनिग्गहा इय चरणमेयं” एतत्प्रतिपादकमध्ययनं चरणविधिः । तथा—“आउरपच्चक्खाणंति” आतुरः क्रियातीतो ग्लानस्तस्य

१ संवच्छरेय दोन्निओ एगंतरियं तु आय्यमं । नाइ विगिट्ठो य तवो छम्मासे परिमियंतु आयामं । अन्नेवि य छम्मासे होइ विगट्ठ तवोकम्मं । वासं कोडीसहियं आयामं काउ आणुपुव्वीए । गिरिकंदरं तु गन्तुं पयावगमणं अहकरेई ।

प्रत्याख्यानं आतुरप्रत्याख्यानं एत्था विही–गिलाण किरियातीत नाउ गीयत्था पच्चक्खावेन्ति। दिणे २ दवहास करेत्ता अन्ते य सव्वदव्वाज्झयणयाए भत्ते वेरग्ग जणेत्ता भत्ते वितिण्हस्स भवचरिम पच्चक्खाण करेंति, एय जत्थज्झयणे सवित्थर वन्निज्जइ तमज्झयणं आतुरप्रत्याख्यानमिति। तथा–"महापच्चक्खाणन्ति" महच्च तत्प्रत्याख्यान चेति समासः। एसत्थ भावत्थो-थेरकप्पेण जिणकप्पेण वा निहरित्ता अन्ते थेरकप्पिया वारस वासे सलेहण करेत्ता, जिणकप्पिया पुण विहारेणेव सलीढा, तहावि जहाजुत्त सलेहण करेत्ता निवाघाय सचेट्ठा चेव भवचरिम पच्चक्खन्ति, एय सवित्थर जत्थज्झयणे वन्निज्जइ तमज्झयण महाप्रत्याख्यानमिति। एवमेतान्यष्टाविंशत्यध्ययनानि यथार्थान्यभिहितान्युपलक्षण चैतानि यतो नैतावन्त्येवोत्कालिकमासीदिति।

सव्वेहिंपि एयम्मि अंगवाहिरे उक्कालिए भगवन्ते ससुत्ते सअत्थे ससगहणिए जे गुणा वा भावा वा अरहन्तेहिं, भगवन्तेहिं पन्नत्ता वा परूविया वा ते भावे सद्दहामो, पत्तियामो, रोएमो, फासेमो, पालेमो, अणुपालेमोते, भावे सद्दहन्तेहिं, पत्तियन्तेहिं, रोयन्तेहिं, फासिन्तेहि, पालन्तेहि, अणुपालंतेहिं अतोपक्खस्स ज वाइय पढिय परियट्टिय पुच्छिय अणुपेहिय अणुपालिय त दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए ससारुत्तारणाए त्तिकट्टु उपसपज्जित्ता ण विहरामि। अन्तोपक्खस्स ज न वाइय न पढिय न परियट्टियं न पुच्छिय नाणुपेहिय नाणुपालिय सन्ते बले, सते विरिए, सन्ते पुरिसकारपरक्कमे, तस्सालोएमो पडिक्कमामो निन्दामो गरहामो विउट्टेमो विसोहेमो अकरणयाए अब्भुट्टेमो अहारिह तवोकम्मं पायच्छित्त पडिवज्जामो तस्स मिच्छामि दुक्कड।

इदमपि सूत्रं आगवत्समवसेयमिति । समुत्कीर्तितमुत्कालिकमथ कालिकोत्कीर्त्तनायाह–

णमो तेसिं खमासमणाणं जेहिं इमं वाइयं अङ्गबाहिरं कालियं भगवन्तं तंजहा–उत्तरज्झयणाइं, दसाओ कप्पो. ववहारो, इसिभासियाइं, निसीहं, महानिसीहं, जंबुदीवपन्नत्ती, सूरपन्नत्ती, चन्दपन्नत्ती, दीवसागरपन्नत्ती, खुड्डियाविमाणपविभत्ती, महल्लीयाविमाणपविभत्ती, अङ्गचूलियाए, वग्गचूलीयाए, विवाहचूलियाए; अरुणोववाए, वरुणोववाए, गरुलोववाए, धरणोववाए, वेसमणोववाए, वेलन्धरोववाए, देविन्दोववाए, उट्ठाणसुए समुट्ठाणसुए, नागपरियावणियाणं, निरयावलियं, कप्पियाणं, कप्पवडिंसयाणं, पुप्फियाणं, पुप्फचूलियाणं वण्हिआणं, वण्हिदसाणं, आसीविसभावणाणं, चारणभावणाणं, महासुमिणभावणाणं, तेयग्गिनिसग्गाणं, सव्वेहिंपि एयंमि अङ्गबाहिरे कालिए भगवन्ते ससुत्ते सअत्थे सग्गन्थे सनिज्जुत्तिए ससङ्गहणिए जे गुणा वा भावा वा अरहन्तेहिं भगवन्तेहिं पन्नत्ता वा परूविया वा ते भावे सद्दहामो पत्तियामो रोएमो फासेमो पालेमो अणुपालेमो ते भावे सद्दहन्तेहिं पत्तियन्तेहिं रोयन्तेहिं फासन्तेहिं पालन्तेहिं अणुपालितेहिं अन्तोपक्खस्स जं वाइयं पढियं परियट्टियं पुच्छियं अणुपेहियं अणुपालियं तं दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए संसारुत्तारणाए त्तिकट्टु उवसंपज्जित्ता णं विहरामि । अन्तोपक्खस्स जं न वाइयं न पढियं न परियट्टयं न पुच्छियं नाणुपेहियं नाणुपालियं सन्ते बले, सन्ते वीरिए, सन्ते पुरिसक्कारपरक्कमे; तस्स आलोएमो पडिक्कमामो निन्दामो गरिहामो विसोहेमो विउट्टेमो अकरणयाए अब्भुट्ठेमो अहारिहं तवोकम्मं

पायच्छित्त पडिवज्जामो तस्स मिच्छामि दुक्कड ॥

एतदपि पूर्ववद् व्याख्येय नवर उत्तरज्झयणाइन्ति" उत्तराणि प्रधानान्यध्ययनानि रूढिवशाद्विनयश्रुतादीन्येव षट्त्रिंशत् प्रथमाङ्गोपरिपाठाद्वोत्तराध्ययनानीति "दसाओत्ति"–दशाध्ययनात्मको ग्रन्थ विशेषो दशाः दशाश्रुतस्कन्ध इति यः प्रतीत इति "कप्पोत्ति"–कल्पः साध्वाचारः स्थविरकल्पादिर्वा तत्प्रतिपादकमध्ययन कल्प इति । "ववहारोत्ति"–प्रायश्चित्तगोचरव्यवहारप्रतिपादकमध्ययन व्यवहार इति "इसिभासियाइन्ति"—इह ऋषयः प्रत्येकबुद्धसाधवस्ते चात्र नेमिनाथतीर्थवर्त्तिनो नारदादयो विंशति', पार्श्वनाथतीर्थवर्त्तिनः पञ्चदश, वर्द्धमानस्वामितीर्थवर्त्तिनो दश ग्राह्याः, तैर्भाषितानि पञ्चचत्वारिंशत्सख्यान्यध्ययनानि श्रवणाद्यधिकार (भ) वन्ति ऋषिभाषितानि । अत्र वृद्धसम्प्रदायः—

" सोरियपुरे नयरे सुरवरो नाम जक्खो धणञ्जओ सेट्ठी सुभद्दा भज्जा । तेहिं अन्नया सुरवरो विन्नत्तो जहा–'जइ अम्हाण पुत्तो होहि तो तुज्झ महिससय देमोत्ति' एव ताण मज्झाओ पुत्तो । एत्थन्तरे भगव वद्धमाणसमी ताणि सबुज्झिहिन्तित्ति सोरियपुरमागओ । सेट्ठी सभज्जो निग्गओ, सबुद्धो, अणुव्वयाणि गहियाणि । सो जक्खो सुविणए महिसे मग्गइ । तेणवि सेट्ठिणा पिट्ठमया दिण्णत्ति । सामिणोय दोन्नि सीसा धम्मघोसोधम्मजसो य एगस्स असोगवरपायवस्स हेट्ठा परियट्टिन्ति । ते पुव्वण्हठिगा अवरण्हेवि छाया न परियत्तइ । तओ इक्को भणइ तुज्झेसा लद्धी । बिइओ भणइ, तुज्झत्ति । तओ एक्को काइयभूमिं गओ जाव च्छाया तहेव अच्छइ । तओ बीओवि गओ तत्थेव तहेव अच्छइ । तेहि नाय जहा एक्कसवि न लद्धी । तओ सामी पुच्छिओ । भगवया भणिय, जहा इहेव सोरियपुरे समुद्दविजओ राया आसि, जन्नदत्तो तावसो, सोमजसा तावसी, ताण पुत्तो नारओ, ताणि उञ्छवित्तीणि

एकदिवसंमि जेमिन्ति, एकदिवसं उववासं करेन्ति । अन्नया ताणि तं नारयं पुवण्हे असोगपायवस्स हेट्ठा ठवेऊणं उञ्छन्ति । इओ य वेयड्ढाओ वेसमणकाइया तिरियजंभगा देवा तेणन्तेणं वीइवयन्ता पेच्छन्ति तं दारयं । ओहिणा आभोइन्ति । सो ताओ चेवदेवनिकायाओ चुओ । तओ ते तस्साणुकंपाए तं छायं थंभन्तित्ति । एवं सो उम्मुकवालभाओ अन्नया तहिं जंभगदेवेहिं पन्नत्तिमाइयाओ विज्जाओ पाढिओ । तओ कञ्चणकुण्डियाए मणिपाउयाहिं आगासे हिण्डइ । अन्नया वारवइं गओ । वासुदेवेण पुच्छिओ । किं सोयं ति ?, सो न तरति परिकहिउं । तओ अन्नकहाए वक्खेवं काऊण उट्ठिओ गओ पुवविदेहं । तत्थ य सीमंधरं तित्थयरं जुगवाहू वासुदेवो पुच्छइ, किं सोयं ? । तित्थगरेणं भणियं, सच्चं सोयन्ति । जुगवाहुणा एक्कवयणेणवि सव्वं उवलद्धं । नारओवि तं निसुणित्ता उप्पइऊणं अवरविदेहं गओ । तत्थवि जुगन्धरं तित्थयरं महावाहू वासुदेवो तं चेव पुच्छइ, भगवयावि तं चेव वागरियं, महावाहुस्सवि सव्वं उवगयं । नाराओवि तं सुणित्ता वारवइं गओ वासुदेवं भणइ । किं ते तदा पुच्छियं । वासुदेवो भणइ किं सोयंति । नारओ भणइ सच्चं सोयं ति । वासुदेवो भणइ किं भणइ किं सचन्ति । तओ नारओ खुभिओ न किञ्चि उत्तरं देइ । तओ कण्हवासुदेवेण भणियं । जत्थेवं तं पुच्छियं तत्थ एयंपि पुच्छियव्वं हुन्तन्ति खिंसिओ । ताहे नारओ भणइ सच्चं भट्टारओ न पुच्छिओत्ति, चिन्तेउमारद्धो, जाईसरया, संबुद्धो, पढममज्झयणं सोयव्वमेव इच्चाइयं वदति । एवं सेसाणिवि दट्ठवाणि त्ति" । "निसीहन्ति" निशीथो मध्यरात्रिस्तद्वद्रहोभूतं यदध्ययनं तन्निशीथं आचाराङ्गपञ्चमचूडेत्यर्थः, असमादेव ग्रन्थार्थाभ्यां महत्तरं महानिशीथं "जंबुदीवपन्नत्तित्ति "—जम्बूद्वीपादिस्वरूपप्रज्ञापनं यस्यां ग्रन्थपद्धतौ सा जम्बूद्वीपप्रज्ञप्तिः "सुरपन्नत्तित्ति"—सूरचरितप्रज्ञापनं यस्यां सा सूरप्रज्ञप्तिः, केचिदेनामुत्कालिकमध्येऽधीयन्ते । तदपि युक्तं । नन्द्यध्ययनेऽप्यसा उत्कालिकमध्येऽधीतत्वादिति "चंदप-

पण्णत्तित्ति '–चन्द्रचारविचारप्रतिपादको ग्रन्थश्चन्द्रप्रज्ञप्तिः "दीवसागरपन्नत्तित्ति"–द्वीपसागराणां प्रज्ञापनं यस्यां ग्रन्थपद्धतौ सा द्वीपसागरप्रज्ञप्तिः । इह चावलिकाप्रविष्टेतरविमानप्रविभजनं यस्यां ग्रन्थपद्धतौ सा विमानप्रविभक्तिः, सा चैका अल्पग्रन्थार्था, तथाऽन्या महाग्रन्थार्था, अत. क्षुल्लिकाविमानप्रविभक्तिः "अङ्गचूलियत्ति"–अङ्गस्याचारादेश्चूलिका अङ्गचूलिका यथाचारस्यानेकविधा, इहोक्तानुक्तार्थसंग्रहात्मिका चूलिका । "वग्गचूलियत्ति"इह वर्गोऽध्ययनादिसमूहः यथान्तकृद्दशास्वष्टौ वर्गा इत्यादि, तस्य चूलिका वर्गचूलिका " विवाहचूलियत्ति " व्याख्या भगवती तस्याश्चूलिका व्याख्याचूलिका " अरुणोववाएत्ति " —इहारुणो नाम देवः तत्समयनिबद्धो ग्रन्थस्तदुपपातहेतुररुणोपपातो, यदा तदध्ययनमुपयुक्तः सन् श्रमणः परिवर्त्तयति तदासावरुणो देवः स्वसमयनिबद्धत्वाच्चलितासनः सम्भ्रमोद्भ्रान्तलोचनः प्रयुक्तावधिस्तद्विज्ञाय हृष्टप्रहृष्टश्चलचपलकुण्डलधरो दिव्यया द्युत्या दिव्यया विभूत्या, दिव्यया गत्या यत्रैवासौ भगवान् श्रमणस्तत्रैवोपगच्छति । उपागत्य भक्तिभरावनतवदनो विमुक्तवरकुसुमवृष्टिरवपतति । अवपत्य च तदा तस्य श्रमणस्य पुरतः स्थित्वा अन्तर्हितः कृताञ्जलिकः उपयुक्तः संवेगविशुद्ध्यमानाध्यवसायः शृण्वंस्तिष्ठति । समाप्ते च भणति 'सुस्वाध्यायितं सुस्वाध्यायितमिति वरं वृणीष्वेति ' ततोऽसाविहलोकनिष्पिपासः समतृणमणिमुक्तालेष्टुकाञ्चनः सिद्धिवधूनिर्भरानुगतचित्तः श्रमणः प्रतिभणति । न मे वरेणार्थ इति, ततोऽसावरुणो देवोऽधिकतरजातसंवेगः प्रदक्षिणां कृत्वा वन्दित्वा नमस्कृत्वा च प्रतिगच्छति । एवं वरुणोपपातगरुडधरणोपपातवैश्रमणोपपातवेलन्धरोपपातदेवेन्द्रोपपातेष्वपि वाच्यम् ।

"उट्ठाणसुएत्ति"–उत्थानश्रुतमध्ययनं " तं पुण सङ्घमाइयकज्जेसु जस्सेगस्स कुलस्स वा गामस्स वा जाव, रायहाणीए वा समणे कयसङ्कप्पे आसुरत्ते चण्डकिए अप्पसन्ने अप्पसन्नलेसे विसमासुहासणत्थे उवउत्ते समाणे उट्ठाणसुयमज्झयणं परियट्टेइ एक

दोन्नि तिन्नि वा वारे । ताहे से कुले वा गामे वा जाव रायहाणी वा ओहयमणसङ्कप्पे विलवन्ते दुयं दुयं पहाविन्ते उद्वेइ, उद्दसइत्ति वुत्तं भवई " । "समुट्ठाणसुएत्ति"–समुत्थानश्रुतमध्ययनं " तं पुण समत्तकज्जे तस्सेव कुलस्स वा गामस्स वा जाव रायहाणीए वा से चेव समणे (कय) सङ्कप्पे तुट्ठे पसन्ने पसन्नलेसे समसुहासणत्थे उवउत्ते समुट्ठाणसुयमज्झयणं परियट्टेइ एक्कं दोन्नि तिन्नि वा वारे, ताहे· से कुले वा गामे वा जाव रायहाणी वा·पहट्ठचित्ते सुपसत्थमङ्गलकलयलं कुणमाणे मन्दाए गईए सललियं आगच्छन्ते समुट्ठाइ, आवसइत्ति वुत्तं भवइ । एवं कयसङ्कप्पस्स परियट्टिन्तस्स पुविट्ठियंपि समुट्ठेइ " इतः षष्ठ्यन्तानि श्रुताभिधानानि दृश्यन्ते, विभक्तिविपरिणामात् प्रथमान्तानि व्याख्येयानि । अथवा–णकारस्यालङ्कारार्थत्वात् प्रथमान्तान्येवामूनि द्रष्टव्यानि । अथवा–प्रथमान्तान्येवामूनि पठनीयानि क्वापि तथैव दर्शनात् । " नागपरियावणियाओत्ति "–नागपरिज्ञा नागत्ति नागकुमारस्तत्समयनिबद्धमध्ययनं " तं जया समणे उवउत्ते परियट्टेइ तया अकयसंकप्पस्सवि ते नागकुमारा तत्थत्था चेव परियाणन्ति वन्दन्ति नमंसन्ति बहुमाणं च करेन्ति, सङ्घमइयकज्जेसु य वरदा भवन्तीति" । निरयावलिआओत्ति"–निरयावलिकाः यासु " आवलियापविट्ठा इयरे य निरया तग्गामिणो य नरतिरिया पसङ्गओ वन्निज्जन्ति" । "कप्पियाउत्ति"–सौधर्मादिकल्पगतवक्तव्यतागोचराः ग्रन्थपद्धतयः कल्पिका उच्यन्ते "कप्पवडिंसियाउत्ति"–"सोहम्मीसाणकप्पेसु जाणि कप्पप्पहाणाणि विमाणाणि ताणि कप्पवडिंसयाणि, तेसु य देवीओ जा जेण तवोविसेसेण उववन्नाओ इड्ढिं च पत्ताओ, एयं जासु सवित्थरं वन्निज्जइ ताओ कल्पावतंसिकाः प्रोच्यन्त इति" "पुप्फियाओत्ति"–इह यासु ग्रन्थपद्धतिषु गृहवासमुकुलपरित्यागेन प्राणिनः संयमभावपुष्पिताः सुखिताः, पुनः संयमभावपरित्यागतो दुःखावाप्तिमुकुलेन मुकुलिताः, पुनस्तत्परित्यागादेव पुष्पिताः प्रतिपाद्यन्ते ताः पुष्पिताः उच्यन्ते । " पुप्फचूलियाओत्ति "–पूर्वोक्तार्थ-

विशेषप्रतिपादिका' पुष्पचूडा इति। " वण्हिदसाओत्ति "–वृष्णिरन्धकवृष्णिनराधिपः तद्वक्तव्यताविषया दशा वृष्णिदशा उच्यन्त इति। "आसीविसभावणाओत्ति "–आस्योदंष्ट्रास्तासु विष येषा ते आसीविषास्ते च द्विविधा' जातित' कर्म्मतश्च, तत्र जातितो वृश्चिकमण्डूकसर्प्पमनुष्यजातयः क्रमेण बहुबहुतरबहुतमातिबहुतमविषा., वृश्चिकविष ह्युत्कृष्टतोऽर्द्धभरतक्षेत्रप्रमाण शरीर व्याप्नोति, मण्डूकविष तु भरतक्षेत्रप्रमाण, भुजङ्गविष तु जम्बूद्वीपप्रमाण, मनुष्यविष तु समयक्षेत्रप्रमाण वपुर्व्याप्नोति । कर्म्मतस्तु पञ्चेन्द्रियतिर्यञ्चो मनुष्या देवाश्चासहस्रारादिति । एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणत आसीविषवृश्चिकभुजङ्गादिसाध्य कर्म्म क्रिया कुर्वन्ति, शापप्रदानादिना पर व्यापादयन्तीत्यर्थः । देवाश्चापर्याप्तावस्थाया तच्छक्तिमन्तो द्रष्टव्याः । ते हि पूर्व मनुष्यभवे समुपार्जितासीविषलब्धय' सहस्रारान्तदेवेष्वभिनवोत्पन्ना' अपर्याप्तावस्थाया प्राग्भविकासीविषलब्धिमन्तो मन्तव्यास्तत' पर तल्लब्धिदिनवृत्ते'पर्याप्ता अपि देवा' शापादिना पर विनाशयति, किं तु लब्धिव्यपदेशस्तदा न प्रवर्त्तत, इत्येवविधमाशीविषस्वरूप भाव्यते प्रतिपाद्यते यासु ग्रन्थ पद्धतिषु ता आशीविषभावना इति ।"दिट्ठीविसभावणाओत्ति"–दृष्टौ विष येषा ते दृष्टिविषाः तत्स्वरूपप्रतिपादिका दृष्टिविषभावना इति। " चारणभावणाओत्ति " अतिशयबहुगमनस्वरूपाच्चरणाच्चारणाः सातिशयगमनागमनलब्धिसपन्नाः साधुविशेषास्ते च द्विविधा (विद्याचारणा' जङ्घाचारणाश्च, तत्र विद्या विवक्षितः कोप्यागमः तत्प्रधानश्चारणो विद्याचारणः,) अस्य च यथाविधिसातिशयषष्ठलक्षणेन तपसा सर्वदैव तपसस्तो विद्याचारणलब्धिरुत्पद्यते, तया चासौ इत एकेनोत्पातेन मानुषोत्तरपर्वत गच्छति, चैत्यानि च तत्र वन्दते, ततो द्वितीयेनोत्पातेन नन्दीश्वरनामानमष्टमद्वीप गत्वा चैत्यानि वन्दते, तत एकेनोत्पातेन प्रतिनिवृत्य यत' स्थानाद्गतः पुनस्तत्रागच्छतीत्येष तावत्तस्य तिर्यग्गतिविषयः । उर्द्ध्वंत्वित एकेनोत्पातेन नन्दनवनं गत्वा तत्र चैत्यानि वन्दते, ततो द्वितीयोत्पातेन मेरु-

शिखरस्थं पण्डकवनं गत्वा चैत्यानि वन्दते, ततश्चैकेनोत्पातेन प्रतिनिवृत्त्य यतः स्थानाद्गतः पुनस्तत्रागच्छतीति । लूतातन्तुनिर्वर्तितपुटकतन्तून्सूरकरान्वा निश्रां कृत्वा (निश्रीकृत्य)जङ्घाभ्यामाकाशेन चरतीति जङ्घाचारणः, अस्य च यथाविधि सातिशयाष्टमलक्षणेन विकृष्टतपसा सर्वदैव तपस्यतो जङ्घाचारणलब्धिरुत्पद्यते, तया चासौ इत एकोनोत्पातेन त्रयोदशरुचकवरद्वीपं गत्वा तत्र चैत्यानि वन्दते, ततो निवर्त्तमानो द्वितीयोनोत्पातेन नन्दीश्वरमागत्य तत्रचैत्यानि वन्दते, ततस्तृतीयोनोत्पातेन यतः स्थानाद्गतस्तत्रागच्छतीत्येपोऽस्य तिर्यग्गतिविपयः । ऊर्द्ध्वन्त्वित एकोत्पातेन पण्डकवनं गत्वा चैत्यानि वन्दते, ततो निवर्त्तमानो द्वितीयोनोत्पातेन नन्दवने चैत्यानि वन्दित्वा तृतीयेनोत्पातेन यतः स्थानाद्गतस्तत्रागच्छतीत्यादिचारणस्वरूपं भाव्यते सविस्तरं प्रतिपद्यते यासु ताश्चारणभावना इति। "महासुविणभावणाओत्ति"–महास्वप्नानि गजवृपभसिंहादीनि भाव्यन्ते यासु ता महास्वप्नभावना इति। "तेयगनिसग्गाणन्ति" तैजसनिसर्गो वर्ण्यते यासु तास्तैजसनिसर्ग्गा इति । अत्र चाशीविपभावनादिग्रन्थपञ्चकस्वरूपं नामानुसारतो दर्शितं, विशेपसम्प्रदायश्च न दृष्ट इति । एतान्यपि पट्त्रिंशदध्ययनान्युपलक्षणभूतानि द्रष्टव्यानि, यतो भगवतो वृपभस्वामिन आदितीर्थकस्य चतुरशीतिप्रकीर्णसहस्राणि, तथा मध्यमानामजितादीनां पार्श्वपर्यन्तानां जिनवराणां संख्येयानि प्रकीर्णकसहस्राणि, यस्य यावन्तः शिष्यास्तस्य तावन्तीत्यर्थः । तथा चतुर्दशप्रकीर्णकसहस्राणि भगवतो वर्द्धमानस्वामिनः आसन्निति। उक्तं कालिकं, तदभिधानाच्चावश्यकव्यतिरिक्तं, तद्भणनाच्चाङ्गबाह्यं श्रुतमुक्तम्। साम्प्रतमङ्गप्रविष्टश्रुतसमुत्कीर्त्तनायाह—

**नमो तेसिं खमासमणाणं जेहिं इमं वाइयं दुवालसंगं गणिपिडगं भगवन्तं तंजहा–आयारो, सूयगडो, ठाणं,**

समवाओ, विवाहपन्नत्ती, नायाधम्मकहाओ, उवासगदसाओ, अन्तगडदसाओ, अणुत्तरोववाइयदसाओ, पण्हावागरणं, विवागसुयं, दिट्ठीवाओ १२। सव्वेहिंपि एयम्मि दुवालसंगे गणिपिडगे भगवन्ते ससुत्ते सअत्थे सगन्थे सनिज्जुत्तिए ससंगहणिए जे गुणा वा भावा वा अरहन्तेहिं भगवन्तेहिं पन्नत्ता वा परूविया वा ते भावे सद्दहामो पत्तियामो रोएमो फासेमो पालेमो अणुपालेमो ते भावे सद्दहन्तेहिं पत्तियन्तेहिं रोयन्तेहिं फासन्तेहिं पालन्तेहिं अणुपालन्तेहिं अन्तोपक्खस्स जं वाइयं न पढियं परियट्टियं पुच्छियं अणुपेहियं अणुपालियं तं दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए संसारउत्तारणाए त्तिकट्टु उवसंपज्जित्ता णं विहरामि। अन्तोपक्खस्स जं न वाइयं न पढियं न परियट्टियं न पुच्छियं नाणुपेहियं नाणुपालियं सन्ते बले सन्ते वीरिए सन्ते पुरिसकारपरक्कमे तस्स आलोएमो पडिक्कमामो निन्दामो गरहामो विउट्टेमो विसोहेमो अकरणयाए अब्भुट्ठेमो अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जामो तस्स मिच्छामि दुक्कडं ॥

एतच्च प्राग्वद्व्याख्येयं, नवरं गणिपिटकम्–आचार्यस्यार्थसारप्रधानभाजनमित्यर्थः। "आयारोत्ति"–आचरणमाचारः आचर्यत इति आचारः, शिष्टाचरितो ज्ञानाद्यासेवनविधिरित्यर्थः, तत्प्रतिपादको ग्रन्थोऽप्याचार एवोच्यते। "सूयगडोत्ति"–'सूच सूचायां' सूचनात्सूत्रं सूत्रेणसूत्रकृतं स्वपरसमयादिसकलपदार्थसूचकं यदित्यर्थः। "ठाणन्ति"-तिष्ठन्त्यासते–वसन्ति यथावदभिधेयतयैकत्वादिवि-

शेपिता आत्मादयः पदार्था यस्मिंस्तत् स्थानम्, अथवा–स्थानशब्देनेहैकादिकः सङ्ख्याभेदोऽभिधीयते ततश्चात्मद्यर्थगतानामेकादिदशान्तानां स्थानानामभिधायकत्वेन स्थानमाचाराभिधायकत्वादाचारवदिति । "समवाओत्ति"–समिति सम्यक्, अवेत्याधिकः,अयः जीवादिपरिच्छेदः समवायः, तद्धेतुश्च ग्रन्थोऽपि समवाय इति । "विवाहपण्णत्तित्ति"–विशिष्टा वाहा अर्थप्रवाहस्तत्त्वार्थविचारपद्धतय इत्यर्थः, तेपां प्रज्ञप्तिः प्रज्ञापनं व्याख्यानं यस्यां सा विवाहप्रज्ञप्तिः,पूज्यत्वेन नामान्तरतो भगवतीत्यपीयमुच्यते "नायाधम्मकहाओत्ति"–ज्ञातान्युदाहरणानि तत्प्रधाना धर्म्मकथा ज्ञाताधर्मकथा–"उवसागदसाओत्ति"–उपासकाः श्रावकस्तद्गतक्रियाकलापप्रतिबद्धा दशाध्ययनोपलक्षिता उपासकदशाः "अन्तगडदसाओत्ति"-अन्तो विनाशः, स च कर्म्मणस्तत्फलभूतस्य वा संसारस्य कृतो यैस्ते अन्तकृतास्ते च तीर्थकरादयस्तेपां दशाः प्रथमवर्गे दशाध्ययनानीति तत्संख्ययोपलक्षिता अन्तकृतदशा इति ।"अणुत्तरोववाइयदसाओत्ति"-उत्तरः प्रधानो नास्योत्तरो विद्यत इत्यनुत्तरः, उपपतनमुपपातो जन्मेत्यर्थः, अनुत्तरश्चासावुपपातश्चेत्यनुत्तरोपपातः, सोऽस्ति येपां तेऽनुत्तरोपपातिकाः सर्वार्थसिद्धादिविमानपञ्चकोपपातिन इत्यर्थः, तद्वक्तव्यताप्रतिबद्धा दशा दशाध्ययनोपलक्षिता अनुत्तरोपपातिकदशा इति । "पण्हावागरणन्ति"–प्रश्नाश्च पृच्छा व्याकरणानि च निर्वचनानि समाहारत्वात्प्रश्नव्याकरणं, तत्प्रतिपादको ग्रन्थोऽपि प्रश्नव्याकरणमिति ।"विवागसुयन्ति"–विपचनं विपाकः शुभाशुभकर्म्मपरिणाम इत्यर्थः, तत्प्रतिपादकं श्रुतं विपाकश्रुतं ।"दिट्ठिवाओत्ति"–दृष्टयो दर्शनानि, वदनं वादः, दृष्टीनां वादो दृष्टिवादः, दृष्टीनां वा पातो यत्राऽसौ दृष्टिपातः, सर्वनयदृष्टयो यत्राख्यायन्ते समवतरन्ति चेति भावः। इत्युत्कीर्त्तितं सामान्यतोऽङ्गप्रविष्टश्रुतं । साम्प्रतं श्रुतदातृपालकेभ्यो नमस्कारमात्मीयप्रमादविपये मिथ्यादुष्कृतं चाह—

नमो तेसिं खमासमणाण जेहिं इम वाइय दुवालसग गणिपिडग भगवन्त, सम्म काएण फासन्ति पालन्ति पूरति तीरति किट्टति सम्म आणाए आराहति, अह च नाराहेमि तस्स मिच्छामि दुक्कड।

नमो नमस्कारोऽस्तु, तेभ्यः क्षमाश्रमणेभ्यः क्षमादिगुणगणप्रधानमहामुनिभ्य' स्वगुरुभ्य' तीर्थकरगणधरादिभ्यो वेति भाव', यैरिद प्रागुक्त वाचित प्रदत्त परिभाषित वा सूत्रार्थत' प्रणीतमित्यर्थ', द्वादशाङ्ग द्वादशानामङ्गाना समाहारो द्वादशा', किंविशिष्ट-मित्याह–"गणिपिटगन्ति" गुणगणः साधुगणो वाऽस्यास्तीति गणी आचार्यस्तस्य पिटकमिव रत्नादिकरण्डक इव पिटक गणिपिटक सर्वार्थसारकोशभूतमित्यर्थ, पुनरपि किंविशिष्ट–"भगवन्तन्ति" भग'–समग्रैश्वर्यादिलक्षण' यदुक्त–"ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः। धर्मस्याथ प्रयत्नस्य षण्णा भग इतीङ्गना" इङ्गना नाम, सा विद्यते यस्य तद्भगवत्, तत्रेह समग्रैश्वर्यं सातिशयाभिधेयविभूति यदवाचि "सव्वनईण जा होज्ज वालुया सव्वउदहि ज वा सलिल। एत्तोवि अणतगुणो अत्थो एगस्स सुत्तस्स" रूप च निर्दोषत्वसारवत्त्वहेतुयुक्तत्वालङ्कृतत्वादिगुणगणसम्पाद्य, यशश्च विश्वव्यापिनी कीर्त्तिः, श्रीश्च कमनीयता श्रुतिहृदयानन्ददायितेत्यर्थ', धर्मश्चाभिधेयत्वेन सर्वोपाधिविशुद्धोऽहिंसादिकः, प्रयत्नश्चाप्यभिधेयतया सर्वप्रमादवर्जनरूप उद्यम', अथवा प्रयत्नो माहात्म्य प्रभाव सामर्थ्यमितियावत्, सुप्रसिद्धश्चैतदागमस्वरूपवेदिनामिति। ये चेद सम्यगवैपरीत्येन कायेन कायप्रवृत्त्या न मनोमात्रेणेत्यर्थः, स्पृशन्ति ग्रहणकाले विधिना गृह्णन्ति, पालयन्ति पुन. पुनरभ्यासकरणेन रक्षन्ति, पूरयन्ति मात्राबिन्द्वक्षरादिभिरध्येतृदोषाद-परिपूर्ण कुर्वन्ति, तीरयन्ति अविस्मृत जन्मपार नयन्ति कीर्त्तयन्ति स्वनामभिः स्वाध्यायकरणतो वा सशब्दयन्ति, सम्यगाज्ञया आराधयन्ति सम्यग्यथावत् आज्ञया तदुक्तार्थरूपया गुरुनियोगात्मिकया वा आराधयन्ति तदुक्तक्रियाकरणतः फलद कुर्वन्तीत्यर्थ',

तेभ्योऽपि नम इति प्रक्रमः । " अहं च नाराहेमि " यच्चाहं-नाराधयामि प्रमादतो नानुपालयामि, तस्सत्ति पष्ठीसप्तम्योरभेदात्त-
स्मिन्नाराधनविपये ' मिच्छामिदुक्कडंन्ति'-मिथ्या मे दुष्कृतमिति स्वदुश्चरितानुतापसूचकं स्वदोपप्रतिपत्तिसूचकं वा प्रतिक्रमणमिति
परिभापितं वाक्यं प्रयच्छामीत्यर्थः । साम्प्रतं प्रस्तुतसूत्रपरिसमाप्तौ श्रुतदेवतां विज्ञपयितुमाह—

**सुयदेवया भगवई नाणावरणीयकम्मसंघायं । तेसिं खवेउ सययं जेसिं सुयसायरे भत्ती ॥ १ ॥**

श्रुतमर्हत्प्रवचनं, श्रुताधिष्ठात्री देवता श्रुतदेवता, संभवति च श्रुताधिष्ठातृदेवता यदुक्तं कल्पभाष्ये-"सव्वं च लक्खणोवेयं सम-
हिट्ठन्ति देवता । । सुत्तं च लक्खणोवेयं जेण सव्वणुभासियं ति" भगवती पूज्या, ज्ञानावरणीय कर्म्मसङ्घातं ज्ञानाशातनाया उद्भूतं
(ज्ञानाघ्नं) कर्म्मनिवहं तेपां प्राणिनां क्षपयतु क्षयं नयतु सततमनवरतं, येपां किमित्याह-श्रुतमेवातिगम्भीरतया अतिशयरत्नप्रचुरतया
च सागरः-समुद्रः-श्रुतसागरस्तस्मिन् भक्तिर्बहुमानो विनयश्च समस्ततीति गम्यते, ननु श्रुतरूपदेवताया उक्तरूपविज्ञापना युक्ता,
श्रुतभक्तेः कर्म्मक्षयकारणत्वेन सुप्रतीतत्वात्, श्रुताधिष्ठातृदेवतायास्तु व्यन्तरादिप्रकाराया न युक्ता, तस्याः परकर्म्मक्षयेऽसमर्थत्वा-
दिति, तन्न । श्रुताधिष्ठातृदेवतागोचरशुभप्रणिधानस्यापि सतुः कर्म्मक्षयहेतुत्वेनाभिहितत्वात्, यदुक्तं-

"सुयदेवयाए जीए संभरणं कम्मक्खयकरं भणियं । नत्थित्ति अकज्जकरी व एवमासायणा तीएत्ति " किञ्चेहेदमेव व्याख्यानं
कर्तुमुचितं, येपां सततं श्रुतसागरे भक्तिस्तेपां श्रुताधिष्ठातृदेवता ज्ञानावरणीयकर्मसङ्घातं क्षपयत्वितिवाक्यार्थोपपत्तेः, व्याख्यानान्तरे
श्रुतरूपदेवता श्रुते भक्तिमतां कर्म्म क्षपयत्विति सम्यग्नोपपद्यते इति, श्रुतस्तुतेः प्राग्बहुशोऽभिहितत्वाच्चेति । ततः स्थितमिदमर्हत्पा-
क्षिकी श्रुतदेवतेह गृह्यते इति ।

॥ इति पाक्षिकवृत्तिः समाप्ता ॥

साम्प्रत शेषप्रतिक्रमणविधिरुच्यते—तओ उद्धट्ठिय पक्खपडिक्कमणसुत्तकित्तणावसाणे विहिणा निसिइत्ता करेमि भन्ते सामाइय इत्यादि सव्व निविट्ठपडिक्कमण कड्ढित्ता उद्धट्ठिया तस्स धम्मस्स अब्भुट्ठिओमित्ति एयमाइय वन्दामि जिणे चउवीसन्ति आलावगपज्जवसाण सुत्त कड्ढन्ति, कड्ढिए य करेमि भन्ते सामाइयमिच्चाइ काउस्सग्गदण्डगुच्चारणपुरस्सर उद्धट्ठिया चेव मूलुत्तरगुणेसु ज खण्डिय तस्स पायच्छित्तनिमित्त उस्सासयतिगपरिमाण काउस्सग्ग करेन्ति, तत्थ वारस उज्जोयगरे चिन्तन्ति, चउमासिए पञ्चसयुस्सासमाण उज्जोयगरे वीस, सवच्छरिए अट्ठुत्तरसहस्सुस्सासमाण उज्जोयगरे चालीस नमोकार च चिन्तति तओ विहिणा पारित्ता चउवीसत्थय पढन्ति, पच्छा उवविट्ठा मुहणतग काय च पडिलेहित्ता किइकम्म करेन्ति, तओ धरणीयलनिहियजाणुकरयलुत्तमङ्गा समग भणन्ति—

इच्छामि खमासमणो अब्भुट्ठिओमि अब्भिन्तरपक्खिय खामेउ पन्नरसण्ह दिवसाण पन्नरसण्ह राईण ज किञ्चि अपत्तिय परपत्तिय भत्ते पाणे विणए वेयावच्चे आलावे सलावे उच्चासणे समासणे अन्तरभासाए उवरिभासाए ज किंचि मज्झ विणयपरिहीण सुहुम वा बायर वा तुब्भे जाणह अहं न याणामि तस्स मिच्छामि दुक्कड ।

अस्यार्थ'—इच्छाम्यभिलपामि क्षमयितुमिति योगः । 'खमासमणोत्ति'—हे क्षमाश्रमण ! ओकारान्तत्व प्राकृतत्वान्न केवलमिच्छाम्येव किन्तु 'अब्भुट्ठिओमित्ति'—अभ्युत्थितोऽस्मि प्रारब्धोऽस्म्यह । अनेनाभिलापमात्रव्यपोहेन क्षमणक्रियायाः प्रारममाह,— अब्भिन्तरपक्खियन्ति पक्षाभ्यन्तरसभवमतिचारमिति गम्यते, क्षमयितु मर्षयितुमिति प्रस्तावना । क्षमणमेवाह—

'पन्नरसण्हंति' पञ्चादशानां दिवसानां, पन्नरसण्हं पञ्चदशानां राईणन्ति, रात्रीणामभ्यन्तरमितिशेषः । 'जं किञ्चित्ति'-यत्किञ्चित्सामान्यतो निरवशेषं वा, अपत्तियं प्राकृतशैल्याऽप्रीतिकमप्रीतिमात्रं, 'परपत्तियन्ति'-प्रकृष्टमप्रीतिकं परप्रत्ययं वा परहेतुकं उपलक्षणत्वादस्य आत्मप्रत्ययं चेति द्रष्टव्यं, भवद्विषये मम जातं भवतां वा मया जनितमिति शेषः, तस्स मिच्छामि दुक्कडमिति सम्बन्धः । तत्र भक्ते-भोजनविषये, पाने-पानविषये, विनये-अभ्युत्थानादिरूपे, वैयावृत्त्ये-औषधपथ्यदानादिनो एव तस्सत्ति-षष्ठीसप्तम्योरभेदात्तस्मिन्न पष्टम्भकरणरूपे, आलापे सकृज्जल्पे, संलापे मिथः कथायां, उच्चासणे समासणे चेति व्यक्तं, 'अंतरभासाएत्ति'-अंतरभाषायामाराध्यस्य भाष्यमाणस्यान्तरालभाषणरूपायां, उपरिभाषायामाराध्यभाषणानन्तरमेव तदधिकभाषणरूपायां, इह समुच्चयार्थश्चशब्दो लुप्तो द्रष्टव्यः, यत्किञ्चितसमस्तं सामान्यतो वा, 'मज्झत्ति' मम विनयपरिहीणं शिक्षावियुतत्वमनौचित्यमित्यर्थः संजातमिति शेषः, सामस्त्यं सामान्यरूपतां वा विनयपरिहीणस्यैव दर्शयन्नाह-सूक्ष्मं वा बादरं वा, वाशब्दौ द्वयोरपि मिथ्यादुष्कृतविषयतातुल्यतोद्भावनार्थौ, 'तुब्भे जाणहत्ति' यूयं जानीथ यत्किञ्चिदिति वर्त्तते, 'अहं न याणामित्ति'-अहं पुनर्न जानामि मूढत्वाद्यत्किञ्चिदिति वर्त्ततेऽप्रीतिकविषये विनयपरिहीणविषये च, 'मिच्छामि दुक्कडन्ति' मिथ्या मे दुष्कृतमिति स्वदुश्चरितानुतापसूचकं स्वदोषप्रतिपत्तिसूचकं वा प्रतिक्रमणमिति परिभाषितं वाक्यं प्रयच्छामीति वाक्यशेषः । अथवा'-'तस्सत्ति'-विभक्तिपरिणामात्तदप्रीतिकं विनयपरिहीणं च मिथ्या मोक्षसाधनविपर्ययभूतं वर्त्तते, से मम, तथा-दुष्कृतं पापमिति स्वदोषप्रतिपत्तिरूपमपराधक्षमणमिति-अत्राचार्यो ब्रूते-'अहमवि खामेमि तुब्भेत्ति' प्रतीतार्थमेवेदमिति । अत्राह-कश्चित्-नणु पुव्वमेव समत्ताओ विसेसओ विपक्खियावराहखामणं कयं, ता किं पुणो इयाणिं पक्खियं खामेहे, उच्यते-काउस्सग्गट्ठियाणं सुभेगग्गभावमुवगयाणं किंचवराहपयं समरियं

होज्जा, तस्स खामणानिमित्त पुरो खामणग करेमोत्ति, अहवा-सवहेह पक्खपडिक्कमणपरिसमत्ती, तओ पुव्विल्लखामणगाणन्तर
ज किञ्चि अपत्तिय वितहकिरियावइयराइणा समुप्पन्न तमिह खामिज्जइत्ति । अहवा-विही चेव सो कम्मक्खयहेऊ भयवया तइय-
वेज्जोसहपओगसरिसो दरिसिओ, ता कायव्वमित्थवि खामणग, न कोइ पज्जणुजोगो कायव्वो, आणा चेवेह भागवई पमाणन्ति—
ततो यथा राजान पुष्य(ष्प)माणवा अतिक्रान्ते माङ्गल्यकार्ये बहुमन्यन्ते यदुत अखण्डितबलस्य ते सुष्ठु कालो गतोऽन्योऽप्येवमेवो-
पस्थित एव पाक्षिक विनयोपचार द्वितीयक्षामणकसूत्रेण तथास्थिता एव साधव आचार्यस्य कुर्व्वन्ति, तचेद—

इच्छामि खमासमणो पिय च मे ज भे हट्टाण अप्पायङ्काण अभग्गजोगाण सुसीलाण सुव्वयाण सायरिय-
उवज्झायाण नाणेण दसणेण चरित्तेण तवसा अप्पाण भावेमाणाण बहुसुभेण भे दिवसो पोसहो पक्खो
वइक्कतो अन्नो य भे कल्लाणेण पज्जुवट्ठिओ सिरसा मणसा मत्थएण वन्दामि ।

तत्रेच्छामि-अभिलषामि वक्ष्यमाण वस्तु, हे क्षमाश्रमण! कुतोपि कारणादप्रियमपि किञ्चिदिष्यत इत्याह-प्रियमभिमत, चश-
ब्दः समुच्चये, मे मम, किं तदित्याह-यद्भे भवता हृष्टाना रोगरहिताना, तुष्टाना तोषवता, अथवेद हर्षातिरेकप्रतिपादनार्थमेकार्थि-
कपदद्वयोपादान, अल्पातङ्काना अल्पशब्दस्याभाववचनत्वात् सद्योघातिरोगवर्ज्जिताना, सामान्येन वा नीरोगाणा स्तोकरोगाणा वा
सर्व्वथा निरुजत्वस्यासभवात्, "अभग्गजोगाणन्ति"-अभग्नसयमयोगाना "सुसीलाणसुव्वयाणन्ति"व्यक्त-साचार्योपाध्यायाना अनुयो-
गाचार्योपाध्यायोपेताना, ज्ञानादिना आत्मान भावयता, बहुशुभेन अत्यर्थश्रेयसा ईषदूनशुभेन वा सर्व्वथा शुभस्यासम्भवात्, भे

इति भो भगवन्तः, दिवसो दिनं, किंविधः?, पौषधः-पर्व्वरूपः; तथा पक्षोऽर्धमासरूपो व्यतिक्रान्तोऽतिलङ्घितः, अन्यश्च पक्ष इति वर्त्तते मे-भवतां, कल्याणेन-शुभेन युक्त इति गम्यते, पर्युपस्थितः-प्रक्रान्त इति । एवं पुष्पमाणव इव मङ्गलवचनमभिधाय प्रणाममाह—शिरसा मनसेति व्यक्तं, चशब्दश्चेह समुच्चयार्थो द्रष्टव्यः। मत्थएणवन्दामि नमस्कार वचनमव्युत्पन्नं समयप्रसिद्धमतः शिरसेत्यभिधायापि यन्मस्तकेनेत्युक्तं तददुष्टं, यथैषां बलीवर्दानां एष गोस्वामीति, गोस्वामिन् शब्दस्य स्वामिपर्यायतया लोके रूढत्वादिति अत्राचार्य आह—तुब्भेहिं समं ति ।

युष्माभिः सार्धमेतत्संपन्नमित्यर्थः । अथ चैत्यवन्दापनं साधुवन्दापनं च निवेदयितुकामा भणन्ति—

इच्छामि खमासमणो पुव्विं चेइयाइं वंदित्ता नमंसित्ता तुब्भण्हं पायमूले विहरमाणेणं जे केइ बहुदेवसिया साहुणो दिट्ठा समाणा वा वसमाणा वा गामाणुगामं दूइज्जमाणा वा रायणिया (सं) पुच्छंति ओमरायणिया वन्दन्ति, अज्जया वन्दन्ति, अज्जिआओ वन्दन्ति, सावया वन्दन्ति, सावियाओ वन्दन्ति; अहंपि निस्सल्लो निक्कसाओ तिकट्टु सिरसा मणसा मत्थएण वन्दामि, अहमवि वन्दावेमि चेइयाइं ।

इच्छाम्यभिलषामि चैत्यवन्दापनं साधुवन्दापनं च भवतां निवेदयितुमिति वाक्य शेषः । " खमासमणोत्ति "—व्यक्तं पुव्विन्ति पूर्वकाले विहारकालवत् । "चेइयाइन्ति"—जिनप्रतिमाः, "वन्दित्तत्ति"—स्तुतिभिः, "नमंसित्तत्ति"—प्रणामतः सङ्घसत्कचैत्यवन्दना ह्येतदहं करोमीति प्रणिधानयोगात्, क्व वन्दित्वेत्याह—"तुब्भण्हन्ति"—युष्माकं "पादमूलेत्ति"—चरणसंनिधौ ततश्च विहरमाणेणन्ति'

ग्रामानुग्राम सञ्चरता मया-"जे केइत्ति"-ये केचन सामान्यतः, "बहुदेवसिया"-बहुदिवसपर्यायाः, "साहुणो दिट्ठा"-इति व्यक्त, किंविधास्त इत्याह-"समाणा वत्ति"-जङ्घाबलपरिक्षयात् वृद्धवासितया आश्रितक्षेत्रादवहिर्वर्तिनो, "वसमाणावत्ति"-विहारवन्तो विहारश्च तेषा ऋतुबद्धे मासकल्पेन वर्षाकाले चतुर्मासकल्पेनेत्यत एवाह-"गामाणुगाम "दूइज्जमाणावत्ति"-ग्रामश्च प्रतीतोऽनुग्रामश्च तदनन्तर इति ग्रामानुग्राम तद् द्रवन्त' गच्छन्त',अथवा-ग्रामादावेकरात्रिक वसन्त आहिण्डका इत्यर्थः, वाशब्दाः समुच्चयार्था', इह स्थाने तेषु मध्ये इति वाक्यशेषो द्रष्टव्य'-"राइणियत्ति"-रात्निका भावरत्नव्यवहारिणः बृहत्पर्याया आचार्या इत्यर्थः। "पुच्छन्तित्ति"-मा प्रश्रयन्ति मया वन्दिताः सन्तो भवता शरीरकुशलादिवार्तामिति गम्य, "ओमराइणियत्ति"-अवमरात्निका भवतः प्रतीत्य लघुतरपर्याया आचार्या एव वन्दन्ते भरतः प्रणमन्ति कुशलादि तु प्रश्रयन्त्येव, "अज्जया वन्दन्ति"-सामान्यसाधवो वन्दन्ते, एवमार्यिकादयोऽपि, तथाहमऽपि तान्यथा दृष्टसाधून्निःशल्यादिविशेषेण वन्दे, शेष प्राग्वत्, तथा—"अहमवि वन्दावेमि चेइयाइन्ति"-तान् यथादृष्टसाध्वादीन् वन्दापयामि चैत्यानि, यथा-अमुत्र नगरादौ युष्मकृते चैत्यानि वन्दितानि तानि च यूय वन्दध्वमित्येवमिति एव शिष्येणोक्तः सन्नाचार्य' प्रत्युत्तरयति यथा—मत्थएण वन्दामि अहपि तेसिं ति

मस्तकेन वन्देऽहमपि तानिति, ये मम वार्तासप्रच्छनादि कुर्वन्तीतिभावः-"अन्ने भणन्ति अहमवि वन्दावेमित्ति"। तत आत्मान गुरूणा निवेदयन्ति तृतीयक्षामणकसूत्रेण, तचेद—

इच्छामि खमासमणो उवट्ठिओमि तुब्भण्हं सन्तियं अहाकप्पं वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा रयहरणं अक्खरं वा पयं वा गाहं वा सिलोगं वा अट्ठं वा हेउं वा पसिणं वा वागरणं वा तुब्भेहिं चियत्तेणं दिन्नं मए अविणएण पडिच्छियं तस्स मिच्छामिदुक्कडंति।

"इच्छामि खमासमणोत्ति" इह स्थाने आत्मानं निवेदयितुमिति वाक्यशेषो दृश्यः "उवट्ठिओमित्ति" उपस्थितोऽस्मि आत्मानिवेदनायेतिशेषः "तुब्भण्हं सन्तियं" युष्माकं सत्कं युष्मदीयमिदं सर्वं यदस्मत्परिभोग्यं किंभूतं किन्तदित्याह–" अहाकप्पन्ति "–यथाकल्पं कल्पानतिक्रान्तं स्थविरकल्पोचितं कल्पनीयं चेत्यर्थः, वस्त्रादि प्रतीतं नवरं 'पडिग्गहन्ति' पात्रं, "पायपुञ्छणन्ति" पादप्रोञ्छनं रजोहरणं "अट्ठंवत्ति"–अर्थः सूत्राभिधेयः प्राकृतत्वाच्च नपुंसकनिर्देशः " पसिणं वत्ति "–प्रश्नः पण्डिताभिमानी परो माननिग्रहाय यत्प्रश्नयति "वागरणन्ति"–व्याकरणं तथैव परेण प्रश्निते यदुत्तरं दीयते, वाशब्दाः समुच्चयार्थाः, एवं वस्त्रादिनिवेदनाद्वारेणात्मानं गुरूणां निवेद्य युष्माभिरेवेदं वस्त्रादिकं मे दत्तं इत्यावेदने तद्ग्रहणेह च संभविनमविनयं क्षमयन्निदमाह–" तुब्भेहित्यादि "–"तुब्भेहिन्ति"–युष्माभिः, "चियत्तेणन्ति" प्रीत्या दत्तं मया त्वविनयेन प्रतीक्षितमत्र यदिति शेषो दृश्यः। "तस्सत्ति" तत्र मिथ्यादुष्कृतमिति प्राग्वत्। एवमुक्ते आचार्यो ब्रूते–आयरियसन्तियं ति।

पूर्वाचार्यसत्कमेतदिति किं ममात्रेति अहङ्कारवर्जनार्थं, गुरुषु भक्तिख्यापनार्थं चैतदिति। अथ यच्छिक्षां ग्राहितारतमनुग्रहं बहुमन्यमाना आहुः–

इच्छामि खमासमणो अहमपुव्वाइं कयाइं च मे किइकम्माइं आयारमन्तरे विणयमन्तरे सेहिओ सेहाविओ सङ्गहिओ उवग्गहिओ सारिओ वारिओ चोइओ पडिचोइओ चियत्ता मे पडिचोयणा उवट्ठिओऽहं तुब्भण्हं तवतेयसिरीए इमाउ चाउरन्तससारकन्ताराओ साहट्टु नित्थरिस्सामित्तिकट्टु सिरसा मणसा मत्थएण वन्दामि।

इच्छामि–अभिलषामि, अहमपूर्वाण्यनागतकालीनानि, कृतिकर्माणीतियोग', कर्तुमिति वाक्यशेषः। "खमासमणोत्ति"–व्यक्त तथा कृतानि पूर्वकाले, चः–समुच्चये, "मेत्ति"–मया कृतिकर्माणि वैयावृत्त्यविशेषा भवतामिति गम्यते, तेषु च "आयारमन्तरेत्ति"–आचारान्तरे कश्चिज्ज्ञानाद्याचारविशेषे विषयभूते आचारव्यवधाने वा सति, ज्ञानादिक्रियाया अकरणे सति इति भावः। तथा–"विणयमन्तरेत्ति"–विनयान्तरे आसनदानादिविनयविशेषे विषयविभूते विनयविच्छेदे वा तदकरणे इत्यर्थ। 'सेहिओत्ति'–शिक्षितः स्वयमेव गुरुभिः शिक्षा ग्राहित इत्यर्थ'। सेधितो निष्पादित आचारविशेषविनयविशेषेषु कुशलीकृत इत्यर्थ। "सेहाविओत्ति"–शिक्षापितः सेधापितो वा उपाध्यायादिप्रयोजनतः। तथा–"सङ्गहिओत्ति"–सङ्गृहीतः शिष्यत्वेनाश्रितः। तथा–उवग्गहिओत्ति"–उपगृहीत. ज्ञानादिभिः वस्त्रादिभिश्चोपष्टम्भित'। तथा-"सारिओत्ति"-सारितो हिते प्रवर्त्तितः,कृत्य वा स्मारितः,"वारिओत्ति"-अहितान्निवारित', "चोइओत्ति"-सयमयोगेषु स्खलित. सन्नयुक्तमेतद्भवादृशा विधातुमित्यादिवचनेन प्रेरित.। "पडिचोइओत्ति"–तथैव पुनः पुनः प्रेरित एव "चियत्ता मे पडिचोयणत्ति"–चियत्ता प्रीतिविषया नत्वहङ्कारादप्रीतेति मे मम प्रतिप्रेरणा भवद्भि' क्रियमाणेति, उपलक्षण चैतच्छिक्षादेरिति। ततश्च "उवट्ठिओहन्ति"–उपस्थितोऽहमस्मि प्रतिप्रेरितार्थसपादनविषये कृतोद्यम इत्यर्थ'। तथा–"तुब्भण्ह तवतेयसिरीए" युष्माक तपस्तेन'श्रिया भवदीयया तपःप्रभावसपदा हेतुभूतया–" इमाउत्ति " इतः प्रत्यक्षात्, " चाउरन्तससारकन्ताराउत्ति "–चतुरन्त

चतुर्विभागं नरकत्वादिभेदेन तदेव चातुरन्तं तत्संसारकान्तारं च भवारण्यमिति समासस्तस्मात्, "साहट्टुत्ति"–संहृत्य कषायेन्द्रिययोगादिभिर्विस्तीर्णमात्मानं संक्षिप्येत्यर्थः। "नित्थरिस्सामित्ति"–लङ्घयिष्यामि, "इतिकट्टु"—इतिकृत्वा इतिहेतोः " सिरसा मणसा मत्थएण वन्दामित्ति " प्राग्वत्, इह भगवन्तमिति वाक्यशेषः; इहाचार्यवचनम्–नित्थारगपारगा होह

निस्तारकाः संसारसमुद्रात् प्राणिनां प्रतिज्ञाया वा (श्र) पारगाः संसारसमुद्रतीरगामिनो भवत यूयमित्याशीर्वचनमिति । पच्छा देवसियं पडिक्कमन्ति, तत्थ खामणानिमित्तं किइकम्मं करित्ता भणन्ति–इच्छामि खमासमणो अब्भुट्ठिओमि अब्भिन्तरदेवसियं पडिक्कखामेउं, जं किंचि अपत्तियमित्यादि, पच्छा साहुदुगं खामन्ति, तओ आयरियस्स य अल्लियावणनिमित्तं पडिक्कमणवत्तं निवेयणत्थंति भणियं होइ किइकम्मं करन्ति, तओ दुरालोइयं वा होज्जा दुप्पडिक्कन्तं वा हुज्जा अणाभोगाइणा कारणेण, तओ पुणोवि कयसामाइआइसुत्तुच्चारणा चरित्तविसोहणत्थमेमव पञ्चासुस्सासपरिमाणं काउस्सग्गं करन्ति, तओ नमोक्कारेण पारित्ता विसुद्धचरित्ता विसुद्धचरित्तदेसयाणं दंसणविसुद्धिनिमित्तं नामुक्कित्तणं करन्ति लोगस्सुज्जोयगरे इत्यादि, तओ दंसणविसुद्धिनिमित्तं पणुवीसूसासपरिमाणं काउस्सग्गं करेन्ति, तओ नमोक्कारेण पारित्ता नाणविसुद्धिनिमित्तं सुयनाणत्थयं पढन्ति,–पुक्खरवरदीवड्ढे इत्यादि; तओ सुयनाणविसुद्धिनिमित्तं पणुवीसूसासपरिमाणं काउसग्गं करन्ति तओ नमोक्कारेण पारित्ता सिद्धत्थयं पढन्ति सिद्धाणं बुद्धाणमित्यादि, तओ सेज्जादेवयाए काउस्सग्गं करन्ति, तत्थ सत्तावीसूसासे पूरन्ति इत्यावश्यकचूर्णिः। आयरणओ अट्ठन्ति, तओ विहिणा निसिइत्ता मुहपोत्तियं ससीसोवरियं कायं च पडिलेहित्ता आयरियस्स वन्दणगं करेन्ति, तं च जहा रन्नो मणूसा आणत्तियाए पेसिया पणामं

काऊण गच्छन्ति, त च सुकय काऊण पुणो पणामपुव्वग निवेदन्ति, एव साहुणोवि गुरुममाइछा वन्दणपुव्वग चरित्ताइविसोहिं काऊण पुणोवि सुकयकिइकम्मा सन्ता गुरुणो निवेदन्ति, भयव कय पेसण आयनिसोहिकारगन्ति (निवेयणत्थन्ति) त च काऊण पुणो उक्कडुया आयरियाभिमुहा विणयरइयञ्जलिपुडा चिट्ठन्ति, जावायरिया वड्ढमाणीओ सरेयं छन्दमा वा तिन्नि थुईओ भणन्ति, इमेवि अञ्जलि-मउलियग्गहत्था एक्केकाए समत्तीए नमोकारग करेन्ति, सबहुमान सिरसा प्रणमन्तीत्यर्थः । केचिदत्र नमो खमासमणाणति भणन्ति, पच्छा सेसगावि तिन्नि थुइओ तहेव भणन्ति, त रयणिं नेव सुत्तपोरिसी नेव अत्थपोरिसी, थयथुइओ भणन्ति, जस्स जेत्तियाओ इन्तित्ति । देवसिए पुण ताव चिट्ठन्ति जाव गुरुथुइगहण करेन्ति, तओ पढमथुइसमत्तीए थुइ कड्ढन्ति, विणओत्ति, सेसाओ दोन्नि तहेव भणन्ति । एष सूत्रोक्तः पाक्षिकप्रतिक्रमणविधिः। चाउम्मासियसवच्छरिएसु वि एस चेव विही, विसेसो खामणगकाउस्सग्गेसु, सो पुण लाघवत्थ दसिओ चेव, तहा चाउम्मासियसवच्छरिएसु मूलगुणउत्तरगुणऽइयाराण आलोयण दाउण पडिक्कमन्तित्ति, खित्त-देवयाए य उस्सग्ग करेन्ति, केइ पुण चाउम्मासिगे सेज्जादेवयाए वि उस्सग्ग करेन्ति, तहा पभाए आवस्सए कए निरइयारावि पञ्चकल्लाणग गेण्हन्ति, पुव्वगहिए य अभिग्गहे निवेदिन्ति, ते य सम्म जइ नाणुपालिया तओ तव्विसुद्धिनिमित्त उस्सग्ग करेन्ति, पुणोवि अन्ने गेण्हन्ति, निरभिग्गहाण य न वट्टइ अच्छिउन्ति, सवच्छरिए य आवस्सए एक पज्जोसवणकप्पो कड्ढिज्जइ, दिवसओ कड्ढिउ चेव न कप्पइ, नावि सञ्जईगिहत्थपासत्थाईण पुरओ, जत्थवि खेत्त पडुच्च कड्ढिज्जइ, जहाणन्दपुरे मूलचेइयघरे दिवसओ सव्वजणसमक्ख कड्ढिज्जइ, तत्थवि साहू नो कड्ढइ, त साहू सुणिज्जा ण दोसो, पासत्थो कड्ढइ, पासत्थए वा कड्ढगस्स असइ दण्डिगेण सड्ढेर्हिं वा अब्भत्थिओ ताहे दिवसओवि कड्ढइ, तत्थ इमो विही, अणागय चेव पञ्चरत्तेण अप्पणो उवस्सए पाउसिए आवस्सए कए

कालं घेत्तुं काले सुद्धे असुद्धे वा पट्ठवेत्ता कड्ढिज्जइ, एव चउसु राईसु; पज्जोसवणराईए पुण कड्ढिए सव्वे साहवो समप्पावणियं काउस्सग्गं करेन्ति, पज्जोसवणकप्पस्स समप्पावणियं करेमि काउस्सग्गं, जं खण्डियं जं विराहियं जं न पडिपूरियं सव्वो दण्डओ कड्ढियव्वो जाव वोसिरामित्ति, लोगस्सुज्जोयगरं चिन्तेऊण उस्सारित्ता पुणो लोगस्सुज्जोयगरं कड्ढन्ता सव्वे साहवो निसीयन्ति, जेण कड्ढिओ सो ताहे कालस्स पडिक्कमइ, ताहे वरिसाकालट्ठवणा ठविज्जइ, तंजहा—ऊणोयरिया कायव्वा, विगइनवगपरिच्चाओ कायव्वो, जम्हा निद्धो कालो, बहुपाणा मेइणी, विज्जगज्जियाईहि य मयणो दिप्पइ, पीढफलगाइसन्थारगाणं उच्चारपासवणखेलमत्तगाण य जयणाए परिभोगो कायव्वो, निच्चं लोओ कायव्वो, सेहो न दिक्खियव्वो, अभिनवो उवही न गहेयव्वो, दुगुणं वरिसोवग्गहोवगरणं धरेयव्वं, पुव्वगहियाण छारडगलाईणं परिच्चाओ कायव्वो, इयरेसिं धारणं कायव्वं, पुव्वावरेणं सकोसजोयणाओ न गन्तव्वमित्यादि, किं च पक्खचाउम्माससंवच्छरियपव्वेसु जहक्कम्मं चउत्थछट्ठट्ठमतवो चेइयवन्दणपरिवाडी सड्ढाणं धम्मकहा य कायव्वत्ति। इयाणिं पसङ्गओ राइयविही भन्नइ—पढमं चिय सामाइयं कड्ढिऊण चरित्तविसुद्धिनिमित्तं पणुवीसुस्सासपरिमाणं काउस्सग्गं करन्ति, तओ नमोक्कारेण-पारेत्ता दंसणविसुद्धिनिमित्तं चउव्वीसत्थयं पढन्ति, पणुवीसुस्सासपरिमाणं काउस्सग्गं करिन्ति, एत्थवि नमोक्कारेण पारित्ता सुयनाणविसुद्धिनिमित्तं सुयनाणत्थयं कड्ढन्ति, तत्थ य पाउसियथुइमाइयं अहिगयकाउसग्गपज्जन्तमइयारं चिन्तेन्ति, आह—किंनिमित्तं पढमकाउस्सग्ग एव राइयाइयारं न चिन्तेन्ति, किंवा पढममेव तिन्नि काउस्सग्गे करिन्ति, उच्यते—निद्दाभिभूया न संभरन्ति, सुट्ठु अइयारं न चिन्तेति, मा य अन्धयारे वन्दन्ताणं अन्नोन्नघट्टणं, अन्धयारे वा अदंसणाओ मन्दसड्ढा न समं वन्दणगं देन्तित्ति काउं पच्चूसे तइए निसाइयारं चिन्तन्ति, आइए य तिन्नि काउस्सग्गा भवन्ति, न पुण पाउसिए जहा एक्कोत्ति, तओ चिन्तेऊणइयारं

नमोकारेण पारित्ता सिद्धाण थुइ काऊण पुव्वभणिएण विहिणा वन्दित्ता आलोएन्ति, तओ सामाइयपुव्वग पडिक्कमन्ति, तओ वन्दणपुव्वय खामेन्ति, तओ कयकिईकम्मा सामाइयपुव्वय काउसग्ग करेन्ति, तत्थ य चिन्तेन्ति कम्मि निओगे निउत्ता वय गुरुहिं, तो तारिस तव पवज्जामो जारिसेण तस्स हाणी न भवइ, तओ चिंतेति—छम्मास खवण करेमो न सक्केमो, एगदिवसेण ऊण तहावि न सक्केमो, एव जाव एकूणतीसाए ऊण, एव पञ्च मासे, तओ चत्तारि, तओ तिन्नि, तओ दुन्नि, तओ एक, तओ एगेण दिणेण ऊण जाव चउदसहि ऊण न सक्केमो, तओ बत्तीसइम तीसइम जाव चउत्थ, आयविल एगट्ठाणय एकासणय पुरिमड्ढ निव्विगइय पोरिसिं नमोकारसहिय वत्ति, एव जे समत्था तव काउ तमसढभावाहियए करेन्ति पच्छा वन्दिता गुरुसक्खिय पवज्जन्ति। सव्वेय न नमोकारइत्तगा समग उट्ठन्ति, काउन्ति वोसिरावेन्ति निसीयन्ति य, एव पोरिसिमाइसु विभासा, तओ तिन्नि थुइओ जहा पुव, नवरमप्पसद्दग देन्ति जहा घरकोइलाई सत्ता न उट्ठन्ति, तओ देवे वन्देन्ति, तओ बहुवेल सदिसावेन्ति, तओ मुहणन्तग पडिलेहित्ता रयहरण पडिलेहिन्ति, पुणो ओहिय सदिसावेन्ति, पडिलेहिन्ति य, तओ वसहिं पमज्जिय काल निवेदेन्ति, अण्णे भणति थुइसमणन्तर काल निवेएन्ति, एव च पडिक्कमणकाल तुलति जहा पडिक्कमन्ताण थुइअवसाणे चेव पडिलेहणवेला भवइत्ति ॥ समासा चेय शास्त्रानुसारिणी पाक्षिकप्रतिक्रमणवृत्तिरिति ॥

॥ कृतिरिय श्रीयशोदेवसूरिभिः। सवत् १३२७ वर्षे माघ सुदि ९ बुधे। मगल महाश्रीः शुभंभवतु भद्रमस्तु ॥ ग्र० ॥

चन्द्रकुलाम्बरशशिनो भव्याम्बुजबोधनैकदिनपतयः । गुणगणरत्नसमुद्रा आसन् श्रीवीरगणिमिश्राः ॥ १ ॥

ये च-शुद्धध्यानजलापनीतकलिलाः सज्ज्ञानदीपालयाः; निःसङ्गव्रतभारधारणरतास्तीव्रे तपस्युद्यताः ।
ग्रीष्मे आतपवेदनां गुरुतरां जेतुं सदोपस्थिता, हेमन्तेषु च शार्वरं हिमभरं सोढुं सदा निश्चलाः ॥ २ ॥

श्रीचन्द्रसूरिनामा तेषां शिष्यो बभूव गुणराशिः । आनन्दितभव्यजनः संशीलसंशुद्धसिद्धान्तः ॥ ३ ॥

कलिकालदुर्लभानां गुणरत्नाना (लब्धीनां यो) निधानमनवद्यम् । समयावदातबुद्धिस्तथापरो देवचन्द्रगणिः॥४॥

श्रीचन्द्रनामसूरेः पादपङ्कजसेविना । लब्धेयं प्रस्तुता वृत्तिः श्रीयशोदेवसूरिणा ॥ ५ ॥

गम्भीरमेतदार्षं न चोहने शक्तिरस्ति मम दक्षा । नापीह संप्रदायः सम्यग्बहवश्च पाठगमाः ॥ ६ ॥

शास्त्रानुसारात्सुखबोधपाठैरात्मीयशक्त्या विधृतं तथापि ।
यच्चेह किञ्चिद्वितथं निबद्धं तत्रास्तु मिथ्या मम दुष्कृतं हि ॥ ७ ॥

अणहिलपाटकनगरे सौवर्णिकनेमिचन्द्रसत्कायाम् । वरपौषधशालायां राज्ये जयसिंहभूपस्य ॥ ८ ॥

विशारदैः सूरिवरैर्विहारिभिर्विशोधिता यत्नपरायणैरियम् ।
तथापि यन्न्यूनमुताधिकं पदं तच्छोधनीयं कुशलैः कृपापरैः ॥ ९ ॥

शुभाशयवशाच्चेह यन्मया सुकृतं कृतम् । ते भूयान्ममाभ्यासः सर्वदैव जिनागमे ॥ १० ॥

एकादशशतैरधिकैरशीत्या विक्रमाङ्कतैः । द्वे सहस्रे शतैरधिकैः सप्तभिर्ग्रन्थमानतः ॥ ११ ॥

यावल्लवणसमुद्रो यावन्नक्षत्रमण्डितो मेरुः । यावच्चन्द्रादित्यौ तावदिदं पुस्तकं जयतु ॥१२॥

॥ मङ्गलमस्तु ॥ इति सूरिश्रीयशोदेवकृता पक्खीसूत्रटीका ॥



॥ इति समाप्तेयं सच्छ्रामणक-पाक्षिक-सूत्रवृत्तिः ॥